श्रीः

    

श्री वैदिकसार्वभौमै र्विरचिता

# दशानिर्णयी



श्रीमदहोबिलमठीय षट्शताब्दीपूर्ति महोत्सवावसरे

श्रीमदहोबिलमठेन प्रकाशिता

बहुधान्य - 1998

# DASANIRNAYEE

by

'Vaidika Sarvabhouma' Sri Venkatanathacharya

is published by

Sri Ahobila Mutt

and released on 25th October 1998

at the Malola Vidvat Sadas

presided over by

H.H. the 45th Azhagiasingar

**Sri Narayana Yatheendra Mahadesikan**

during

**the Sixth Centenary Celebrations**

of Sri Ahobila Mutt

at Sri Ahobila Kshetram

श्री:

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नम:

श्रीमद् हारीतकुलतिलकै:

वैदिकसार्वभौमनाम्ना सुप्रसिद्धै: धर्मतत्त्वस्थैयै: श्री वेङ्कटनाथार्यै:

वैदिककर्मानुष्ठानसौकर्याय विरचिता

# दशनिर्णयी

श्रीमदहोबिलमठे पञ्चचत्वारिंशे दिव्यास्थाने मूर्धाभिषिक्तानां

श्रीमत्परमहंसेत्यादि विशेषणबृन्द विभूषितानां

**श्री लक्ष्मीनृसिंहदिव्यपादुकासेवक श्री वण्शठकोप**

**श्री नारायणयतीन्द्र महादेशिकानां**

दिव्य नियमनानुसारेण

साहित्य व्याकरण वेदान्तादि नानाशास्त्रसंस्तविना पण्डितप्रवरेण

पळवेरि चक्रवर्ति श्री उ.वे. निगमान्ताचार्यतनुभुवा

**श्री उ.वे. प.च. गोपालाचार्येण परिशोध्य**

आस्तिकाग्रगण्यानां आङ्ग्लभाषाध्यापकानां

पन्दलूकुडि वेलामूरू श्री उ.वे.वरदाचार्यस्वामिनां तनुजेन

**श्री उ.वे. रामभद्राचार्येण परिष्कृत्य**

**श्रीमदहोबिलमठीय षट्शताब्दीपूर्ति महोत्सवावसरे**

श्रीमदहोबिलदिव्यक्षेत्रे

बहुधान्य तुला शुक्ल पञ्चम्याम्

प्रकाशिता

विजयतेतमाम् ।

# श्रीमददादिवण् शठकोप यतीन्द्र महादेशिकाः



यच्छिष्याग्र्यो वैदिकानां सार्वभौमत्वमेत्य च ।
रत्नाकरादीन् कृतवांस्तन्मुनेर्मङ्गळं सदा ॥

श्रीः

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

श्रीमते श्रीलक्ष्मीनृसिंहदिव्यपादुकासेवक

श्री वण्शठकोप श्री नारायणयतीन्द्र महादेशिकाय नमः

# प्रास्ताविकम्

वैदिकाचारतत्पराणां श्रीवैष्णवानां सविधे सप्रश्रयं किञ्चिद् विज्ञाप्यते ।

एषु दिवसेषु धर्मशास्त्रग्रन्थानां मुद्रणं विविधश्रमाणां स्थानं भवतीति सर्वविदितम् । आदर्तारो विरलाः अनुतिष्ठासवश्च तादृशा इति इदमपि तत्र हेतूभवति ।

पूर्वस्मादेवाश्रमात् अनुष्ठानप्रसिताः, अद्य श्रीमदहोबिलमठे पञ्चचत्वारिंशं पदं भूषयन्तः श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य, परमहंस-परिव्राजकाचार्य, सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीभगवद्रामानुज-सिद्धान्तनिर्धारणसार्वभौमाः श्री लक्ष्मीनृसिंह दिव्यपादुकासेवक श्रीवण्ठकोप श्री नारायणयतीन्द्र महादेशिकाः अनुष्ठातृजनहितकाम्यया लौकिकं श्रममविगणय्य, अद्य 'दशनिर्णयी' ग्रन्थप्रकाशनाय समुदयच्छन्निति भाग्यमिदं वैदिकलोकस्य । 'आचिनोति हि शास्त्रार्थान् आचारे स्थापयत्यपि । स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते ।।' इत्यत्र प्रथमोदाहरणतां यान्त्याचार्या एते ।

आचार्यवरैः पूर्वाश्रमे एव प्रकाशितः श्री सन्निध्याह्निकार्थप्रकाशः अनुष्ठानौपयिकैर्विविधैर्विषयैस्संवलितः न केवलं श्रीसन्निधिसम्प्रदाय-मात्रस्य, किन्तु श्रीमन्निगमान्तमहादेशिक सत्पथानुयायिनां अन्येषामपि आस्तिकवर्याणां समेषाम् तत्तदनुष्ठानवैखरीः प्रदर्श्य उपकारातिशय-मातनोदिति वैदिकप्रपञ्चः समतुष्यत्। सैषा आचार्यवराणाम् अनुजिघृक्षा तान् दशनिर्णयी प्रकाशने समुदतेजयदिति कृतार्था भवन्ति सदाचारप्रणयिनः।

ग्रन्थप्रणेतॄणां महत्तां प्रकाशयितुं न मादृशो जनः अलम् भवति। हारीतकुलतिलकाः श्रीरङ्गनाथार्यतनूजाः श्रीवेङ्कटनाथार्य इति सुगृहीत-नामानः इमे महान्तः वैदिकसार्वभौमा इति बिरुदनाम्नैव प्रथन्ते सर्वत्र। श्रीसन्निधौ प्रत्यहमनुसन्धीयमानः श्रीमदादिवण्शठकोपयतीन्द्र महादेशिक मङ्गळगतः 'यच्छिष्याग्र्यो वैदिकानां सार्वभौमत्वमेत्य च। रत्नाकरादीन् कृतवांस्तन्मुनेर्मङ्गळं सदा' इति। तदनुग्रहेण रत्नाकरादीन् नैकान् धर्मशास्त्रग्रन्थान् प्रणिन्युरिति तात्पर्यमस्य श्लोकस्य।

स्वयमेते स्वकृतीरुदाहरन्नेवम् 'आशौचपूर्वशतकं पितृमेधसारं व्याख्यां तयोश्च दशनिर्णयगृह्यरत्ने। रत्नाकरं विबुधकण्ठविभूषणं च, प्राह प्रबन्धमिति वैदिकसार्वभौमः॥' इति। एवं सविशेषं महतः एतानुद्दिश्य जानीमः। सदनुष्ठानप्रकाशकेषु एतद्ग्रन्थेषु दशनिर्णयी प्रबन्धे श्रीजयन्ती, कृत्तिकादीपोत्सव, उपाकर्म, प्रवर, समान प्रवरादि, विवाह्य कन्या, स्थालीपाक, अभक्ष्यभक्षण प्रायश्चित्त, उत्सव, एकादश्यः कूलङ्कषं विचार्य

निर्णीयन्ते । प्रवर-समानप्रवर-प्रकरणे अपहाय अन्यत्र नैकाः स्मृतीः उदाहृत्य योग्यतममनुष्ठानं एते निश्चिन्वन्ति । तत्तेषां भिन्नानुष्ठानमार्गाणामपि उपपत्तीः दर्शयन्ति । अशोभनान् पथो निरस्यन्ति । तत्र तत्र 'अयमत्रविवेकः' इत्यादिना अनुष्ठेयसारं च प्रकाशयन्ति । समयेषु, अधिमास, मलमास, संसर्प, गुरु-शुक्र-मौढ्य, वञ्जुळैकादशी, विष्णुशृंखलायोगादीनां स्वरूपदर्शनेन बहूपकुर्वन्ति च । श्री वैद्यनाथदीक्षिता अपि धर्मनिर्णयचतुराः स्वग्रन्थेषु बहुत्र एतदीयकृतीरुदाहरन्ति ।

एषां निर्णयकौशलं ईषदपि वा उदाहर्तव्यमिति किञ्चित् प्रयत्यते । धीमन्तः अस्मिन् ग्रन्थे बहुत्र एतत्कौशलं द्रक्ष्यन्त्येव । 'श्रावण्यां प्रौष्ठपद्यां वा' इति श्रीकृष्णाष्टमी विकल्प्यते । अनुष्ठानं एकाग्रतामपेक्षत इति लोको जानाति । अत्र पामरोऽपि किं भगवान् द्विरवातरदिति पृच्छेत् ।

अत्रैषां शास्त्रसम्मतं विकल्पासहं समाधानं रुचिरं द्रष्टव्यम् । 'सिंहादौ तदन्ते वा श्रीकृष्णाष्टमीसम्भवे चान्द्रे पूर्वा श्रावणी, परा भाद्रपदीति तदभिप्रायेण तयोः प्रवृत्तिरित्यविरोधः । श्रावणे योगाभावे 'श्रावणे न भवेद्योगो नभस्ये तु भवेद् ध्रुवम्' इति भाद्रपद्यां योगसंभवे तद्ग्रहणस्मरणात् । तस्याश्च सिंहमासस्थत्वाच्च इति । एतेषां विचारशैली मितमतीनामपि सुज्ञेयेति विवरीतुमिदमुक्तम् ।

षण्णवतेः वत्सरेभ्यः पूर्वं महीशूरपुरे आन्ध्रलिप्यां मुद्रितमेकं पुस्तकं श्री. उ.वे., पादूरु, सरलकवि, पुराणं राघवाचार्याः, श्री.उ.वे.

मेल्पाक्कं नरसिंहाचार्याः प्राप्तराष्ट्रपतिसन्मानाः, इत्युभाभ्यां महावैयाकरणाभ्यां अन्योऽन्यसहायेन देवनागरलिप्यां प्रत्यक्रियत । सुस्पष्टः, स हस्तलिखितः कोशः अस्मिन् मुद्रणे सातिशयमुपाकरोत् । मादृशाभिवन्दनीयौ तौ कृतज्ञतया सह सविशेषं स्म्रियेते । सा प्रतिकृतिः तदान्ध्रीलिपि पुस्तकञ्च एतन्मुद्रणस्य मूलं भवतः । मुद्रणस्यास्य परमं निदानं आचार्याणां इदानीन्तनानां परैव कृपा तदुत्तम्भिता आशिषश्चेति सदैव एते वैदिकलोकस्य उत्तमर्णा राजन्ते । दासं सैव कृपा वस्तूकृत्य मुद्रणशोधनकृत्ये प्रावर्तयदिति धन्योऽसौ । त्रुटयः बहुशस्सम्पतिताः मदीयाः अन्तर्वाणिभिस्सोढव्याः इति च दासः अभ्यर्थयते । अस्मिन् शोधनकृत्ये प्राप्तानुभवाः श्री उ.वे. व.रामभद्राचार्याः नितान्तमुपाकुर्वन्। तेष्वपि कृतज्ञो दासो भवति ।

विजयगीत् एण्टर्प्रैसस् संस्थाधिकारी, श्री नागपट्टणं बृहस्पति श्री उ.वे.रामस्वामि अय्यङ्गार् स्वामिनः कुमारः, श्री कण्णन् स्वामी, ग्रन्थस्य मुद्रणे नितान्तं साहायकमाचरत्। सः सुबहु पर्यश्राम्यत्। तस्मिन्नपि कृतज्ञः । वर्धिष्णुं तम् आचार्या अनुगृह्णन्तु ।

इति श्रीनियमनानुसारी
पळवेरि चक्रवर्ति गोपालदासः
आस्थान विद्वान्
श्री अहोबिलमठम्

श्री अहोबिलमठम्
चेम्बूर्, मुम्बई ।



द्वितियास्थानेऽभिषिक्तः श्रीनारायण यतीन्द्र महादेशिकः

श्रीमददादिवण् शठकोप यतीन्द्र महादेशिकाः

श्री वैदिकसार्वभौमः

# दशनिर्णयीस्थविषयसूचिका

श्री :



# दशनिर्णयी

नमस्ते रमाधीश! पुंसे परस्मै

नमस्ते विधीशादि देवार्चिताङ्घ्रे ।

नमस्ते मुकुन्दारविन्दाक्ष ! विष्णो !

नमस्ते समस्तेश ! मह्यं प्रसीद ॥

दशार्थिनी श्रीदशनिर्णयीति

[illegible]नुबन्धस्मृति सन्निबन्धम् ।

स वैदिकै वैदिकसार्वभौम:

संगृह्यतां संग्रहसार्वभौम: ॥

निर्मत्सरोऽस्तीति कृति: कृता मे

सोऽयं न चेत्स्वार्थमिवास्तु सा मे ।

भुङ्क्ते स्वयं हि स्वकृतं ततस्तां

निन्दन्तु नन्दन्तु भजन्तु वान्ये ॥

फल्गूनि वल्गूनि बुधो विविङ्क्ते
यथैव पाथांसि पयांसि हंसः ।
कृतिं बुधाः पश्यत मे किमन्यैः
किं वेत्त्यहो काचमणि र्मणीन्द्रम् ॥

# श्रीजयन्तीनिर्णयः ।

इह तावज्जयन्तीनिर्णयः क्रियते । सर्वत्र निर्णये शास्त्रमेव प्रमाणं, न युक्तयः । यदगायि भगवता-

'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तु मिहार्हसि' ।। इति ।

ननु श्रीधरीयज्योतिषार्णवकालनिर्णयादिषूक्ता जयन्ती निर्णीयते किमर्थमिति चेत् - मैवम् । तेषु साकल्येनानुक्तेः । उक्तं हि काल-निर्णये साकल्येनेति चेत् तदपि न चतुरश्रमिव दृश्यते । तथा हि 'रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी', इत्यत्र शुक्ल-पक्षादिमासविवक्षया या श्रावणी भवति सैव कृष्णपक्षादिमास-विवक्षया भाद्रपदी भवतीति 'श्रावणे मासि' इत्यादिवचनविरोधः पर्यहारि, हन्त! सन्तोऽपि वचनार्थं वृथा व्यतिवदन्ते । अहो संपश्यत मध्यस्थाः । एवमाख्याने कर्कटकादौ दर्शे सति तदन्तः कृष्णाष्टमी श्रावणी भाद्रपदी चेति तत्रैव जन्माष्टमी जयन्ती च प्रसज्येत । प्रसज्यतां नाम को दोषः ? अयं तर्हि दोषः सिंहार्के

तद्व्रतद्वयविधायिभिः श्रीधरीयज्योतिषार्णवबृहस्पतिनारदवराह-ब्रह्मसंहितादिवचनैर्विरोधो वेधोमुखैरपि दुर्निरोधो भवेत् तानि वचनान्यवसरे स्पष्टमुदाहरिष्यामः ।

'ऊर्ध्वं सितचतुर्दश्याः प्रतिपत्तोऽधरा तिथिः ।
[1]ऋतुसंधिः स विज्ञेयो वपनं कारयेद्यतिः ॥'

इति पौर्णमास्यन्तमासस्य यतिविषयत्वावगमाच्च। किञ्च श्रावण्या एव भाद्रपदीत्वेन 'श्रावण्यां प्रौष्ठपद्यां वा' इति विकल्पो दुर्वचः स्यात्, "न तु भाद्रपदाष्टमी" इति निषेधश्च न स्यात् । किञ्च आषाढ्याः पौर्णमास्याश्च संगवव्यापिन्याः श्रावणीत्वेन तस्यां मिथुनमासस्थायामेवोपाकर्म, वृषभपौर्णमास्या आषाढीत्वेन तत्रैव चातुर्मास्यव्रतं च प्रसजेत् । अहो किमेवं लोके शिष्टानुष्ठानं दृष्टमिष्टं श्रुतं वा। वयं तु ब्रूमः सिंहादौ तदन्ते वा कृष्णाष्टमीसंभवे चान्द्रे पूर्वा श्रावणी परा भाद्रपदीति तदभिप्रायेण तयोः प्रवृत्तिरित्यविरोधः । श्रावणे योगाभावे 'श्रावणे न भवेद्योगो नभस्ये तु भवेद् ध्रुवम्' इति भाद्रपद्यां योगसंभवे तद्ग्रहणस्मरणात् तस्याश्च सिंहमासस्थत्वाच्च । 'न तु भाद्रपदाष्टमी' इति निषेधः

कन्या भाद्रपदाभिप्रायः - 'न तु कर्कटकन्ययोः' इति वचतात्। किञ्च -'केवलेनोपवासेन तस्मिञ्जन्मदिने मम' इति केवलशब्दो दानादिव्युदासकः। अतो जन्माष्टमीव्रतस्योपवासमात्रमेव स्वरूपं फलाश्रवणान्नित्यञ्चेति विवक्षितमिमं पक्षं सूक्ष्मेक्षिकया वीक्षितम् [1]अत्यचक्षत। अत्र दानादिभ्य उपवासस्य प्राधान्यमात्रपरः केवल-शब्दो युक्तः, पापक्षये दानादिनैरपेक्ष्यपरो वा। न तु दानादि-व्युदासकः।

'मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षके।
शशांके वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके॥

योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत्।
तस्मान्मां पूजयेद्भक्त्या शुचिस्सम्यगुपोषितः॥

ब्राह्मणान्भोजयेद्भक्त्या ततो दद्याच्च दक्षिणाम्।
हिरण्यधान्यभूगावो वासांसि कुसुमानि च॥
यद्यदिष्टतमं तत्तद्विष्णुर्मे प्रीयतामिति।'

इति भविष्योत्तरवचनेऽष्टमीरोहिणीयुक्तनिशीथकालीनकृष्ण-जन्मनिबन्धनेनैव दानादिविधानात् जन्मनिमित्तोभयव्रतविषयमेव

1. अत्यचक्षत → अत्यचुक्षुदत् (पा)

दानादिकम् । नह्यत्र केवला तिथिर्नक्षत्रं वा निमित्तम् । कालान्तरेऽपि तत्प्रसक्तेः । प्रतिमासं जन्माष्टम्यां दानोपवासादि शक्तैः क्रियत इति चेत् सिद्धं तर्हि दानादि तदंगमिति योगनिमित्तत्वेऽपि योगनिबन्धनत्वाज्जयन्तीनिर्णय एव जन्माष्टमीव्रतेऽपि तुल्य इति वदतां संनियोगशिष्टत्वात् तदुभयव्रतविषयमेवेति सुव्यक्तम्। किञ्च-जन्मनिमित्तं वा योगनिमित्तं वा दानादिविशिष्टविधिपरमेवेदं वचनम् । अप्राप्तार्थत्वादाग्नेयादिवाक्यवत् । तच्च जन्मनिमित्तत्वाज्जन्माष्टमीजयन्त्योस्समानम् । तथापि न पृथक्कार्यम् । यथा प्रयाजादिः पश्वर्थं सकृदनुष्ठितः पशुतन्त्रान्तःपातिनः पशुपुरोडाशस्याप्युपकारकस्तथा प्रसंगेन वा, यथा वा सकृत्कृतः प्रयाजादिर्दर्शपूर्णमासयागानां षण्णामङ्गम्, तथात्रापि तन्त्रेण वा सकृदेव कृतं दानादि जयन्त्यन्तर्भूतजन्माष्टमीव्रतार्थमपि भविष्यतीति न कश्चिच्चोद्यावकाशः । अस्ति च फलश्रवणं तस्मिन्नेव वचने उत्तरार्धे 'सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः' इति। वह्निपुराणे च जन्माष्टमीजयन्त्योः पार्थक्येन फलं स्मर्यते -

'सप्तजन्मकृतं पापं राजन् यत्त्रिविधं नृणाम् ।
तत्क्षाळयति गोविन्दस्तिथौ तस्यां स्वभावतः ।।

उपवासश्च संप्रोक्तो महापातकनाशनः ।
जयन्त्यां जगतीपाल विधिना नात्र संशयः ॥

नारदीय संहितायां च -

'उपोष्य जन्मचिह्नानि कुर्याज्जागरणं तु यः।
अर्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेत्' ॥

विष्णुधर्मोत्तरे -

'यद्बाल्ये यच्च कौमारे यौवने वार्धके तथा ।
बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिः ॥'

व्रतमात्रे च- "पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनम् " इति । नेदं सर्वफलश्रवणं जयन्तीविषयमिति वाच्यम्-तिथिग्रहणात् । पापक्षयफलश्रवणमात्रेण न काम्यत्वं सन्ध्यावन्दनस्यापि तथा प्रसक्तेरितिपरिहारः प्रतिबन्द्येव। तदकरणे सर्वकर्मानर्हत्व प्रसक्त्या हि तस्य केवलनित्यत्वं, फलश्रुतेरर्थवादत्वं च। नैवं जन्माष्टमी-जयन्त्योर्व्रतस्यासंस्कारकर्मत्वात् ।

किञ्च -

'प्रेतयोनिगतानां तु प्रेतत्वं नाशितं हि तैः ।
यैःकृता श्रावणे मासि अष्टमी रोहिणीयुता ॥

किंपुनर्बुधवारेण सोमेनापि विशेषतः ।
किंपुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥'

इति पद्मपुराणादिवचनेषु फलश्रवणं बुधवारादिवद्रोहिणी-तद्योगयोरुपलक्षणत्वेन जन्माष्टम्याः प्राधान्यवादिनां मते तस्या एव स्यादिति जन्माष्टमी काम्यैव स्यात् । तदिदं विद्वांसो विदांकुर्वन्तु । किमन्ये साध्वसाधुनी व्यतिविद्रते । अतो जयन्तीव-ज्जन्माष्टमी च नित्या काम्या च फलप्रत्यवाययोः श्रुतेस्संनियोग-शिष्टत्वाच्च । अत एव हि रक्ता विरक्ता वा शक्त्या जयन्त्यामुप-वसन्ति । किञ्च-योगे तिथेः प्राधान्यं दुर्भणम् । रोहिणी युक्ताष्टमी-वत् अष्टमीयुक्ता रोहिणीति च स्मृतेः । तथा नारदीयादौ – 'रोहिणी चाष्टमीयुक्ता कृष्ण पक्षेऽष्टमीयुता ।', 'चन्द्रोदयेऽष्टमीयुक्ता' इत्यादि द्रष्टव्यम् । जन्माष्टमी रोहिणी चेति समप्राधान्यस्मृतेश्च । अत एव हि व्रतभेदः । किञ्च-

'सिंहस्थेऽर्केऽसिते पक्षे रोहिण्यामष्टमीयुते ।
चन्द्रोदये जयन्ती स्यात्केशवाराधनं परम् ॥'

'रोहिण्यामर्धरात्रे तु यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरे र्हन्ति पापं त्रिजन्मजम् ॥'

'रोहिणी सहिता कृष्णा मासि भाद्रपदेऽष्टमी ।'
'अष्टमी कृष्णपक्षस्य रोहिण्यृक्षेणसंयुता ॥'
'रोहिणी तु यदाष्टम्यां कृष्णायां श्रावणे भवेत् ।'

इत्यादिषु रोहिणीयोगस्मरणात् कृत्तिकाव्युदासः । अष्टमीयोगस्मरणात्सप्तमीयोग निषेधः । एवं वेधनिषेधोऽष्टमीरोहिणीयोगादन्यत्र । तथा नारदीय संहितायाम्-

'विद्धाष्टमी द्विजैर्ग्राह्या सप्तम्यां रोहिणी यदि ।
न चेत्परस्मिन्दिवसे निशानाथोदये द्विज ॥'

वह्नि पुराणे -

'सप्तमीसहिताष्टम्यां निशीथे रोहिणी यदि ।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम् '

पाद्मे च - 'कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी ।' वराहसंहितायां च -

सिंहार्के रोहिणीयुक्ता नभः कृष्णाष्टमी यदि ।
रात्र्यर्धपूर्वापरगा जयन्ती कलयापि वा ॥ इति ॥

रात्र्योरर्धे रात्र्यर्धे, अत्रार्ध शब्दो निशीथ परः । तयोः पूर्वापरे गच्छति व्याप्नोतीति रात्र्यर्धपूर्वापरगा । निशीथात्पूर्वं पूर्वदिने व्याप्ता

रोहिणीयुक्ताष्टमी ग्राह्या। परदिने निशीथादूर्ध्वव्याप्ता ग्राह्येत्यर्थः। 'अर्धरात्रादधस्ताद्वा', 'अर्धरात्रादधश्चोर्ध्वम्' इत्यादीनामपि स एवार्थः। पूर्वदिने निशीथवेधशङ्काविधूननाय परदिने निशीथ-व्याप्त्यभावसन्देहव्युदासाय च पूर्वोत्तरदिनग्रहणनियमपरं रात्र्यर्धेत्यादि द्रष्टव्यम्। अतो रोहिण्ययोगे दिवसविद्धा त्याज्यैव। तथा पाद्मे - 'सप्तमी संयुता न हि' इति। ब्रह्मकैवर्ते च - 'न सप्तम्या युताष्टमी' इति। जयोत्तर संहितायाम् -

'अष्टमी सप्तमीयुक्ता रोहिणी कृत्तिकान्विता।
तद्दिनं वर्जये द्धीमांस्तदन्ये वासरे चरेत्॥

सारसमुच्चये च -

दशम्यैकादशी त्याज्या सप्तम्या संयुताष्टमी।
कृत्तिका रोहिणी त्याज्या त्याज्या पर्व चतुर्दशी॥

स्मृत्यन्तरे च -

नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता।
नवम्या सहकार्या स्यादष्टमी नात्र संशयः॥

कृष्णजन्माष्टमी लोके प्रसिद्धा पापनाशनी।

इत्यादि द्रष्टव्यम् । एतद्वचनजातं दिनद्वये निशीथयोगे पूर्वदिन-त्यागपरं निशीथवेधत्यागपरं वेति चेन्न- अप्रतीतार्थ कल्पने ह्यति-प्रसंगात् । 'पूर्वविद्धैव कर्तव्या', 'जयन्त्यां पूर्वविद्धायाम्' इत्यादीनामपि तथात्वप्रसक्तेः । निशीथवेधत्यागपर निशीथाधो-वेधग्रहणपरवचनान्तरबलान्न तत्प्रसंग इति चेत्-तर्हि वचनान्तर-बलादेव रोहिण्ययोगे दिवसवेधश्च त्याज्य इति द्रष्टव्यम् । अत्र नारदीये -

अर्धरात्रादधस्ताद्वा दिवा वापि च सप्तमी ।
न त्याज्या रोहिणीयुक्ता अष्टमी नान्यथा शुभा ।।

जयोत्तर संहितायां च-

दिवसे कृत्तिकायुक्ता रात्र्यर्धे रोहिणी यदि ।
अष्टमी पूर्वया विद्धा वर्जयेत्तां प्रयत्नतः ।।

स्मृत्यन्तरे च -

अष्टमी सप्तमीविद्धा रोहिणी कृत्तिकायुता ।
दशम्यैकादशीविद्धा हन्ति पुण्यं पुरातनम् ।।

स्कान्दे च- 'पूर्वविद्धा तथाष्टमी । सप्तमी परया विद्धा नोपोष्या' इति । जयोत्तर संहितायां च -

कलया कृत्तिकायुक्ता संपूर्णा रोहिणी यदि।
तां तिथिं वर्जयेद्विद्वान् मोहात्पापमवाप्नुयात्॥

अतस्तिथ्यृक्षयोर्युक्तयोर्वियुक्तयोर्वेधस्य वर्जनीयत्वमवर्जनीयम्।

'अष्टमी शिवरात्रिश्च अर्धरात्रादधो यदि।
दृश्यते घटिका या सा पूर्वविद्धा प्रकीर्तिता॥'

इति वचनान्न दिवावेध इति चेन्न- 'अर्धरात्रादधश्चोर्ध्वमेकार्ध-घटिका यदि' इत्यादिवत् पूर्वविद्धोक्तिमुखेन कर्मकाले युक्ता-नियमपरत्वात् तस्य। अतो नेदं विद्धाग्रहणपरम्, नापि दिवावेधनिषेधपरं वा - अप्रतीतेः। 'जयन्त्यां पूर्वविद्धायाम्', 'पूर्वविद्धा जयन्ती वा' इत्यादीनामस्य वचनस्य च किं पूर्वविद्धा त्याज्या ग्राह्या वेति प्रश्ने 'नष्टाश्वदग्धरथ' न्यायेनान्योन्य - सापेक्षतया मिथस्संबन्धात् पूर्वविद्धाया जयन्त्या-स्सामानाधिकरण्यदर्शनात् 'अष्टम्यामसिते तिथौ। जयन्तीनाम' इत्यष्टम्यां जयन्तीशब्दप्रयोगाच्च, पूर्वविद्धाष्टमी जयन्त्येवेति निश्चीयते। अतो जयन्त्याः कर्म काल व्याप्तिपरमेव तत्। 'जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च। पूर्वविद्धैव कर्तव्या' इति पृथगभिधानाद् विद्धाष्टमी ग्राह्येति चेन्न- 'च' शब्देनेतरेतर-

योगपरेण रोहिणीयुक्ताष्टमी विषयत्वावगमात्।

अर्धरात्रादधस्ताद्वा दिवा वापि च सप्तमी।
न त्याज्या रोहिणीयुक्ता अष्टमी नान्यथा शुभा॥

विद्धाष्टमी द्विजैर्ग्राह्या सप्तम्या रोहिणी यदि।
न चेत्परस्मिन्दिवसे निशानाथोदये द्विज॥

इति रोहिण्यन्वयव्यतिरेकाभ्यामेव ग्रहणाग्रहण निर्धारणात्।

'कार्या विद्धापि सप्तम्या रोहिणीसंयुताष्टमी।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम्॥

सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम्॥

कार्या विद्धापि सप्तम्या रोहिणीसंयुताष्टमी।
जयन्ती शिवरात्रिश्च कार्या भद्रा जयान्विता॥'

इत्यादिपाद्मवह्न्यादित्यपुराणविष्णुधर्मादिवचनैकार्थ्याच्च रोहिणीयुक्ताष्टमीविषयमेव तत्। नहि प्रातीतिकोऽर्थोऽर्थः, किन्तु वचनान्तराविरुद्धो न्याय्यश्च। 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इति स्मृतेः। यजेत, निदिध्यासितव्य इत्यादेराकाङ्क्षात्रय-

पूर्वकवाक्यान्तरेणार्थनिश्चयवत् तादृशेन वचनान्तरेणैवार्थ-निर्णयस्य कर्तुं युक्तत्वात्। एवं हि न्यायविदुद्घोषः-

'धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति।
लोकदृष्टिं प्रतिघ्नन्ति वचनव्यक्तिपांसुभिः ॥'

इति च। स्मृतिष्वष्टमीरोहिणीयोगस्यैव जयन्तीत्वोक्तेः। पूर्वविद्धा ग्रहणस्य 'पूर्वविद्धा जयन्ती वा', 'जयन्त्यां पूर्वविद्धायाम्' इत्यादिभिर्जयन्तीविषयत्वावगमाज्जयन्त्यन्तर्गताया अपि जन्माष्टम्या ग्रहणपक्षे जयन्तीयोगनिर्णयस्समान इति ज्ञापनाय व्रतभेदसूचनाय च जन्माष्टमी रोहिणी चेतियोगान्तर्गतयोस्तयो-रवयुत्यानुवादो द्वादशकपालान्तर्गताष्टकपालादिवत्। यद्वा - मिथो विरहिणी रोहिणी वाष्टमी यदा पृथक्पृथग्गृह्यते तदा योगान्तर्भूतयोस्तयोः पृथग्ग्रहणार्थः पृथङ्निर्देशः। अतो निशीथे-ऽन्तर्युक्तयोरेवाविद्धयोर्ग्रहणं न वियुक्तयोः प्रमाणाभावात्। ननु निशाया अर्वाक् सप्तम्या कियत्यापि युक्ता विद्धा। सा त्रिविधा

पूर्वेद्युरपरेद्युरुभयेद्युश्च निशीथ व्यापिनीति। सूर्योदयमारभ्य प्रवर्तमाना शुद्धा । सा निशीथव्याप्त्यव्याप्तिभ्यां द्विविधा । एवंभूतरोहिणीरहिता विद्धा। शुद्धाष्टमीग्रहणे -

'दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥'

इति वचनमेव तत्र प्रमाणमिति चेन्न - प्रळये 'न ब्रह्मा नेशानः' इत्यर्थलोपश्रुतेः 'हिरण्यगर्भस्समवर्तताग्रे', 'शिव एव केवलः' इति वाक्यस्येव तस्य वचनस्य तत्परत्वानुपपत्तेः ।

'जयन्ती द्विविधा ज्ञेया विद्धा शुद्धेति सा द्विधा।
विद्धा तु सप्तमीयुक्ता शुद्धा तु नवमीयुता ॥
रोहिणी कृत्तिकायुक्ता विद्धा शुद्धा परान्विता ॥'

इति नारदीयोक्तमतिक्रम्य वेधपक्षपातेन युक्त्याऽनल्पविकल्प-कल्पनेऽपि तस्य विद्धादिभेदकल्पनस्यानुपपत्तेश्च । इयं शुद्धा सूर्योदयमारभ्यैव प्रवृत्ता वा यद्वा निशाया अर्वाक्, किं वा निशीथादूर्ध्वं, उत - निशीथादर्वाक्प्रवृत्ता - नाद्यः निशीथ-व्याप्तेर्दुर्वचत्वात् । न हि किञ्चिदधिका चत्वारिंशद्घटिका

तिथिरस्ति । न द्वितीयः - असंभवात् । न हि पूर्वदिने निशाया अर्वाक्प्रवृत्ता विद्धा वा शुद्धा वा परदिने निशीथव्यापिनी भवति, न हि पञ्चसप्ततिनाडिका तिथिरस्ति । न तृतीयः - अनुक्तेः । तथा विवक्षितमितिचेन्न - "शुद्धा तु नवमीयुता" इतिस्मृतिविरोधात् विद्धाशुद्धयोस्सांकर्येण शुद्धेति - दुर्भणत्वाच्च । सूर्योदय-मारभ्येत्युक्ते निरर्थकत्वाद्गौरवाच्च । न चतुर्थः - तथानुक्तेः । उक्तौ वा ततः किम् । निशीथव्याप्तिस्संभवतीति चेत् ततोऽपि किम् । 'रात्रियुक्ताम्' इति वचनात् तद्ग्रहणमिति चेन्न । 'विशेषेणेन्दु-संयुताम्' इति वचनाद्विद्धाग्रहणप्रसक्तेः । तच्चविरुद्धं 'सप्तम्या संयुता न हि' इति स्मृतेः । शुद्धाविषयं तदिति चेत् सिद्धं तर्हि विद्धावर्जनम् । विद्धाविषयं च तदिति चेन्न - 'इन्दुसंयुताम्', 'रात्रियुक्ताम्' इति विधिद्वयबलात् पूर्वापरदिनवर्तिन्यो र्विद्धा-शुद्धयो र्द्वयोरप्यष्टम्यो र्ग्रहणप्रसक्तेः पूर्वेद्युरेव 'निशीथव्यापिनी ग्राह्या' इत्युक्तेः, निशीथव्याप्तिरहितापि रात्रियुक्ता शुद्धा ग्राह्येत्युक्तेश्च । अतो द्वौ विधी मिथस्सन्नद्धौ युध्येताम् । 'विशेषेणेन्दुसंयुताम्' इति वचनाद्विद्धैव ग्राह्येति चेत्, अहो वेधापह्नवनैपुणी ! मैवम्, शुद्धाग्रहणोक्तेः । तच्चानुपपन्नं - पूर्वेद्यु-

निशाया अर्वाक्प्रवृत्ताया विद्धायाश्शुद्धाया वा श्वो निशीथव्याप्त्ययोगे तद्भेदः स्यात् भेदस्यासंभवेन तद्वचन विषयत्वानुपपत्तेः। तर्हि कथं विद्धाग्रहणमिति चेन्न - अप्रतीतेः। न हि तस्मिन्वचने 'कार्या विद्धापि' इतिवद् विद्धा ग्राह्येति प्रतीयते विद्धात्यागपरवचननिचयापचयायोगाच्च। अतोऽत्र प्रकारभेदग्रहणसाक्षित्वेन हठात्पठितं शठोक्तिवदर्थं न प्रत्याययति तद्वचनम्। अतो नारदीयलक्षितमेव लक्षणं विलक्षणं विचक्षणानाम्। प्रकरणाविरुद्धो वचनान्तरानुगुणोह्यर्थस्समर्थ्यस्समर्थैः। वराहसंहितावचनं हीदम् - तत्र 'सिंहेऽर्के रोहिणीयुक्ता नभः कृष्णाष्टमी यदि' इति प्रक्रान्तत्वादिदं रोहिणीयुक्ताष्टमी विषयमित्यवगम्यते। अतोऽस्यायमर्थः। यदा पूर्वदिने दिवा रोहिणी नास्ति परदिने रात्रौ च सा नास्ति तदा संकल्पकालीनत्वादि गुणयोगात्पराग्राह्या, 'उत पूर्वेद्युः पूर्वोक्तगुणाभावेऽपि इन्दूदययोगस्य बलीयस्त्वेन पूर्वा वा ग्राह्येति संदेहे इदंवचनमुपस्थितं व्यवस्थापयति इन्दुसंयुतैव ग्राह्येति। युक्तं चैतत् - श्वो निशीथयोगाभावात् 'जन्मकालान्विता यतः चन्द्रोदयेऽष्टमीयुक्ता', 'सप्तम्यामर्धरात्राद्धः कलयापि' इत्यादि वचनैककण्ठ्यात् प्रकरणानुगुण्याच्च। किञ्च - 'विद्धाष्टमी द्विजग्राह्या', 'कार्या विद्धापि', 'विद्धाविद्धापि

वा ग्राह्या' इतिवद् रोहिणीरहितापि विद्धापि जन्माष्टमी ग्राह्येति नकिञ्चिद्वचनमुदाहृतं न दृष्टं च क्वचिद्ग्रन्थे। रोहिणीयोग एव विद्धा ग्राह्येति वह्निपुराणे च व्यक्तमुक्तम्।

'विद्धा कृष्णाष्टमी ग्राह्या रोहिणीसहिता नृप।
रोहिण्या सहिता चैव सर्वाघौघविनाशिनी॥' इति।

अतो रोहिणीरहितविद्धाष्टमीग्रहणे प्रमाणं मृग्यमेव। किञ्चायं चर्चितो निर्विपक्षप्रकरणनिरपेक्षः पक्षो दिवा च रात्रौ च रोहिण्यभावेऽपि सूर्योदयसंकल्पकाले सायाह्नरात्रिचन्द्रोदय कालव्याप्तिरूपगुणाधिक्यात् तिथिप्राधान्याच्च अहोरात्रि-व्यापिनी शुद्धाष्टम्येव ग्राह्येति। तथा नारदीयसंहितायाम् -

'चन्द्रोदयेऽष्टमी पूर्णा रोहिणी न भवेद्यदि।
तदा जन्माष्टमी ज्ञेया न जयन्तीति कथ्यते॥'

चन्द्रोदये रोहिणी न भवेद्यदीत्यन्वयः। ब्रह्म संहितायां च -

'श्रावण्यां कृष्णपक्षस्य घटीषष्टिर्यदाष्टमी।
तदा जन्माष्टमी प्रोक्ता सा संपूर्णा प्रकीर्तिता॥'

विद्धाधिकाष्टमी परैव ग्राह्येत्युक्तं तत्रैव -

त्रिमुहूर्तं तिथे वृद्धौ सुनिरीक्ष्य परीक्षयेत् ।
सा तु जन्माष्टमी ज्ञेया भुक्तिमुक्तिफलप्रदा ।।

सारसमुच्चये च -

एकादश्याममायां च द्वादश्यां कृष्ण जन्मनि ।
पश्चाद्भागकलामात्रं कर्माद्यन्तावसानिकम् ।।

अमायामिति कुहूशान्तिविषयम् । पाद्मे च -

'पूर्व विद्धाष्टमी या तु उदये नवमी दिने ।
मुहूर्त मपि संयुक्ता संपूर्णा साष्टमी भवेत् ।।

कला काष्ठा मुहूर्तापि यदा जन्माष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्य[redacted]ा संयुता न हि ।।'

इत्यादि परदिनग्रहणमुखेन रोहिणीरहितविद्धाष्टमीत्यागपरम् । एतत्सर्वं रोहिणीयुक्तविद्धाधिकाष्टमीविषयं किं न स्यादिति चेन्न- तेषु रोहिणी योगाप्रतीतेः । हन्त किमिदं वचनजातं वेधत्याग- चिह्नमह्नाय निह्नूयते । प्रागेव वचनार्थापह्नवचातुरी कृता, अतस्तेषां तद्विषयत्वकल्पनं न कल्पते विकल्पासहत्वात् । एवं वदन्तं भवन्तं पृच्छामः - किमिदं निशीथवेधे परदिनग्रहणपरम्-आहोस्वित् तदर्वाग्वेधे किं वा दिवसवेधे, यद्वा निशीथादूर्ध्ववेधे - नाद्यः -

अविवादात्। न द्वितीयः - 'अर्धरात्रादधस्ताद्वा' इति विद्धाग्रहण-विधानात् । नह्येवं केवलाष्टमीग्रहणे प्रमाणमस्ति रोहिणीरहिता विद्धापि जन्माष्टमी ग्राह्येति । न तृतीयः- कृष्णावतारकाले योगत्याग प्रत्यवायस्मृतेः । न चतुर्थः- विरोधादसंभवाच्च । निशीथादर्वाक्प्रवृत्ता परेहन्यपि वर्तमाना विद्धाधिका इत्युक्ताया निशीथादूर्ध्वप्रवृत्त्यनुपपत्तेस्तयोरन्यतरोक्तावन्यतरस्य व्याहति-रवर्जनीया । निशीथादूर्ध्वं प्रवृत्तस्य तिथेः श्वो निशीथावधि वा दिनान्तं वा व्याप्तेः, उदये नवमी दिने कलाकाष्ठामुहूर्तादि-शब्दस्वारस्याभावाच्च । पूर्वेद्युरुदयानन्तरं कियत्यपि वेधे हि परदिने कलाकाष्ठादि संभवति । न हि निशीथादूर्ध्वप्रवृत्तयो-स्तथात्वमिति चेन्न तेषां त्वया निशीथादूर्ध्वप्रवृत्ततिथिनक्षत्र-विषयत्वकथनात् त्वदुक्तिवैयर्थ्यापत्तेः विद्धकेवलाष्टमी-विषयत्वाच्च । तेषां निशीथात्प्राग्वा दिवा वा प्रवृत्ताष्टमी-विषयत्वोक्तौ निशीथयोगात्तिथिप्राधान्याच्च पूर्वदिनस्यैव ग्राह्यत्व[illegible]ङ्गीकार्यम् । तच्च तव न शक्यं श्वो मुहूर्त-मात्रयोगे तद्ग्रहणपरविष्णुरहस्यवचनविरोधात्। न विरोधः श्व एव रोहिणीयोगात्तद्ग्रहणमिति चेन्न - तिथिऋक्षयोरुभयोर्निशीथा-

दूर्ध्वप्रवृत्त्युक्तिविरोधात् पूर्वेद्युः प्रवृत्तान्यतरमुहूर्तयुक्तान्यतर-ग्रहणपरं हि तद्वचनम् । तथापि तद्विषयत्वकथने मुखान्तरेण विद्धाष्टमीत्याग एव निश्चितस्स्यात् । बाढं - श्वो रोहिणीयोग-प्राबल्यादितिचेत् हन्त किं तिथिप्राधान्यं तदा भग्नमुत लग्नमग्नौ मग्नमब्धौ वा। एवं च त्वदुक्त्यैव रोहिण्ययोगे सर्वथा विद्धाष्टमी-त्यागसिद्धेस्तद्ग्रहणे वचनाभावाच्च रोहिणीरहितापि निशीथ-व्यापिनी विद्धाष्टमी ग्राह्येति किं विप्रलपितम् । तत्र पूर्वदिन-ग्रहणोक्तिः पूर्वपरदिनयोः रोहिणीरहिताष्टमीविषया, परदिनग्रहणोक्तिस्तु तद्युक्ताष्टमीविषयेति न विरोधोक्तिरिति चेन्न- 'रात्रियुक्ताम्' इत्यस्य रोहिणीरहितविद्धाष्टमीग्रहणपरत्वानुप-पत्तेरुक्तत्वात्। तर्हि न विरोध इतिचेत् सत्यम् - केवल विद्धाष्टमी त्यागपक्षे । तद्ग्रहणपक्षे तु विरोधोऽस्ति वा न वेति स्वयमेव परामृशतु भवान् । रोहिणीयुक्तपरदिनग्रहणेऽपि विद्धां जन्माष्टमीं परित्यज्य जयन्त्येव परिगृहीता स्यात्। ततश्च विद्धात्यागपरवचन-जातं विष्णुरहस्य वचनद्वयं च चिरं जीवेत्। श्वो रोहिणीयोगे विद्धा ग्राह्येति चेन्न - वचनाभावात्, विद्धात्यागस्य वचनशतसिद्धत्वाच्च 'पूर्वविद्धाष्टमी' इति पाद्मे श्वो मुहूर्तमपि विद्धकेवलाष्टमी योगेऽपि

तद्ग्रहणविधानाच्चेत्यलमलं वन्ध्यासुतवर्णनकल्पैर्विद्ध-केवलाष्टमीग्रहणानुलापैः । किञ्च केयं विद्धाधिकानाम रोहिणीयुक्ता श्वो विद्यमानाष्टमी - सा निशीथादर्वाक्प्रवृत्ता वा तत्परं वा नाद्यः परदिनग्रहणानुपपत्तेः। निशीथयोगस्यैव ग्राह्यत्वस्मृतेः । न द्वितीयः - निशीथादधस्सप्तमीयुक्ताष्टम्या एव विद्धात्वोक्तेः । श्वो वर्तिन्यास्तु - 'विद्धातु सप्तमीयुक्ता शुद्धा तु नवमीयुता ' इति स्मृतेश्शुद्धात्वाच्च । निशीथादूर्ध्ववर्तिन्या अनुभयत्वेन विद्धात्वोक्तौ 'अर्धरात्रादधो यदि', 'अर्धरात्रा-दधस्सा हि' इत्यादि स्मृतिः स्मर्यते। किञ्च निशीथे रोहिण्यभावस्य श्वोऽष्टमीरोहिणीयोगस्य तिथिप्राधान्यस्य च तुल्यत्वेऽप्येकस्य पूर्वत्र ग्रहणमन्यस्य परत्र ग्रहणमुक्तं तदविमृश्यैवोक्तं, विष्णु-रहस्यवचनैः परदिनमेव ह्युभयत्र ग्राह्यम् । तच्च तव न शक्यं 'विशेषेणेन्दुसंयुताम्' इत्यस्य त्वया पूर्वदिनग्रहणपरत्वोक्तेः । तस्मादस्माकमेव न विरोधगन्धः । 'न चेत्परस्मिन्दिवसे निशानाथोदये द्विज', 'रात्र्यामिन्दूदये शुभे', 'सायन्तनी त्रिमुहूर्तगा' इत्यादिवद्विशिष्टैकविध्यंगीकारात्तव मते दिनद्वये कदाचिन्निशीथेन्दुयोगे द्वौ विधी मिथस्संनद्धावद्धा युध्येता-

मित्यधस्तादभ्यधायि। अतोऽन्यतरबाधोऽवश्यं कार्यः। ततो वरं विशिष्टविध्याश्रयणमित्यास्तां तावत्। व्यत्यस्तमिदं समस्तं व्युदस्तम्। नापि श्वस्तिथिऋक्षयोगस्सुवचः - तेष्वप्रतीतेः। 'कला काष्ठा दिवा वापि' इत्यादि वचनेषु पूर्वविद्धतिथिमात्रातिरेकोऽभिभाति भेदेनैव तेष्वेकातिरेकस्स्फुटः। किञ्च -

सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्धं भवेद्यदि॥
तदष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा।

इति स्कान्दवचनम्, 'प्राजापत्यं द्वितीयेऽह्नि' इत्यादि 'प्रोक्तं भगवता स्वयम्' इति जयोत्तरसंहितावचनं च श्वोरोहिणीमात्रातिरेकं व्यनक्ति, न तिथ्यतिरेकोऽपि। अतःश्वस्तिथिऋक्षोभययोगस्य दुर्भणत्वात् त्वदुक्तविद्धाधिकाविषयत्वं नोपपद्यत इत्यलमलमनल्पविकल्पकल्पनयाल्पजनमोहनाय। तस्माच्छ्वः कलाकाष्ठ मुहूर्तादियोगे विद्धायाः केवलाष्टम्याः परदिनग्रहणपराणि पद्मपुराणादिवचनानि। विष्णुरहस्यवचनद्वयं तु विद्धयोर्वा शुद्धयोर्वा श्वोऽन्यतरेणान्यतरस्याल्पयोगेऽपि परदिनग्रहणपरमिति न कश्चिद्विरोधः। अतो 'दिवा वा यदिवा रात्रौ' इत्यस्य रोहिणी-

रहितविद्धाष्टमीविषयत्वानुपपत्तेः 'अष्टमी शिवरात्रिश्च' इत्यस्य पूर्वविद्धाग्रहणपरत्वासंभवाच्च प्रत्युत केवलविद्धात्यागस्य वचन-शतसिद्धत्वाच्च, रोहिणीरहितविद्धाग्रहणं प्रामाणिकानां न युक्तमिति सिद्धम् । विद्धात्यागो वैष्णवविषय इति चेत् किं पिष्टपेषणेन । मैवम् । निशीथवेधत्यागस्यापि वैष्णवविषयत्व प्रसक्तेः । तत्त्यागवचनेषु विषयभेदो न प्रतीयत इति चेत् तुल्यमत्रापि । सामान्येन सप्तमीविद्धात्यागपरवचनेषु विषयभेदा-प्रतीतेः । अष्टम्ययोगे जयन्तीस्वरूपेण न स्यादिति चेन्न-तिथ्यन्तर योगे च जयन्तीत्वस्मृतेः । तथा नारदीयसंहितायाम् -

अष्टम्यां वा नवम्यां वा दशम्यां यत्र रोहिणी ।
सा जयन्तीति विख्याता प्रशस्ता भुक्तिमुक्तिदा ।।

ब्रह्मसंहितायां च -'शशिना सह रोहिणी । जयन्तीनाम पुण्या स्यादष्टम्या सहिता न वा ।।' इति । तर्हि अष्टमीरोहिणीयोगस्य जयन्तीत्वस्मरणविरोध इति चेन्न विषयभेदेनाविरोधात् । प्रत्युत रोहिणीयोगे सप्तमीवेधे च -

'संपूर्णा रोहिणी यत्र अष्टमी न भवेद्यदि ।
रोहिण्यामेव कुर्वीत कृष्णजन्माष्टमीव्रतम् ।।

विशेषाद्रोहिणीचन्द्रे गृहस्थो व्रतमाचरेत् ।'

इति नारदीयादिवचनैः रोहिण्यां जन्माष्टमीव्रतविधानेऽपि रोहिण्या वेधे जन्माष्टम्येव स्वरूपेण लुप्येत सप्तमीविद्धत्वादष्टम्याः श्वो रोहिण्याश्च वह्निविद्धत्वात् । अतः पूर्वविद्धात्यागपरमेव कलाकाष्ठादिग्रहणपरं तद्वचनजातम् । न तु रोहिणीयुक्त-विद्धाधिकाष्टमीविषयमिति शेमुषीविशेषजुषां विदुषां सुव्यक्तम् । नात्र पक्षपातो युक्तयो वा प्रगल्भन्ते । तमिमं निश्चयं विपश्चि-दपश्चिमा विमृशन्तु ते हि युक्तायुक्ते न व्यतिविदते । एवं श्वस्तिथि-नक्षत्रयोरल्पीयसान्यतरेणान्यतरयोगे तद्दिनमेव ग्राह्यमिति विष्णुरहस्योक्तम् । तथा -

'प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि याष्टमी ।
मुहूर्तमपि संयुक्ता सोपोष्या सुमहाफला ॥

मुहूर्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते ।
अष्टम्यां रोहिणी ऋक्षं तां सुपुण्यामुपावसेत् ॥

रोहिणीसहितां हित्वा योऽन्यस्यामाचरेत्क्वचित् ।
स सर्वैस्सुकृतैर्हीनस्तिर्यग्योनिषु जायते ॥'

सारसमुच्चये च -

प्राजापत्यर्क्षसंयुक्ता मुहूर्तमपि लभ्यते ।
नवम्यामष्टमीयुक्ता मृगेण दशमीयुता ॥

जयोत्तरसंहितायां च -

रोहिणी कलया युक्ता कृत्तिकाभिर्विना भवेत् ।
अष्टमी कलया युक्ता मम प्रीतिकरी भवेत् ॥

अष्टमी कलया युक्ता संपूर्णा रोहिणी यदा ।
सैवोपोष्या महापुण्या महापातकनाशिनी ॥

एवमादीनि विद्धाष्टमीत्यागपराणि द्रष्टव्यानि । वैष्णवैर्निशीथ-योगोऽपि न ग्राह्य इति वक्ष्यते ।

'रोहिणी चाष्टमी युक्ता कलया सप्तमीयुता ।
सा तिथिर्निष्फला त्याज्या उपवासादि वर्जयेत् ॥'

इत्यादिवचनैः । एवमत्र व्यवस्था नास्था विस्मरणाद्वचनादर्शनाद्वा स्मार्तपक्षोक्तेस्तत्र तदनादर इतिचेन्न - 'जन्मकालान्विता यतः', 'वासरे वा', 'श्रावणे वा नभस्ये वा', 'रात्रियुक्तां प्रकुर्वीत',

'रात्र्यर्धपूर्वापरगा', 'उपोष्य जन्मचिह्नानि' इत्यादिभिर्वसिष्ठ-वराहसनत्कुमारनारदादि संहितावचनैश्च निश्चयकरणा-दविरुद्धांशस्य सर्वत्र ग्राह्यत्वाद्विषयभेदेनाविरोधाच्चेत्यलमल-मनुलापेन ॥

अत्रायं विवेकः- 'जयन्ती द्विविधा प्रोक्ता' इति नारदीयवचनाद् विद्धा शुद्धा चेति द्विविधैव। अष्टमी रोहिणी च अहोरात्रव्यापिनी शुद्धा। 'घटी षष्टिर्यदाष्टमी' इतिस्मृतेः। शुद्धाधिका विद्धाधिका च शुद्धैव परान्वितत्वात्। रोहिण्यष्टमी-साहित्यं योगः। पूर्वतिथिऋक्षयोरन्यतरसंपर्को वेधः। निशीथयोगे सत्येव विद्धा ग्राह्या नान्यथा। दिन द्वये निशीथ योगे तदयोगे च परैव ग्राह्या। अहोरात्रव्यापिनी विद्धाविद्धयोरन्यतरेण मुहूर्तमात्र-योगेऽपि परैव ग्राह्या। निशीथवेधे विद्धा विद्धोपरुद्धाप्युभयी-परैवग्राह्या। तथा वियुक्ता विद्धा च परैव ग्राह्या। शुद्धा वा विद्धा वा बुधवारयोगे बुधयुक्तैव ग्राह्या। निशीथयोगे श्वोऽन्यतरा-तिरेकेऽपि पूर्वविद्धैव ग्राह्या वैष्णवेतरैः। निशीथयोगो वैष्णवेतर-विषयः। श्वो मुहूर्तयोगस्सर्वविषय इति संक्षेपः। शिष्टमुपरिष्टात् स्पष्टयिष्यामः।

अतः परं जयन्ती निर्णीयते - जयन्ती नामाष्टमीरोहिणीयोगः । तथा श्रीविष्णुधर्मे -

रोहिणीसहिताकृष्णा मासि भाद्रपदेऽष्टमी ।
अर्धरात्रादधस्सा हि कलयापि यदा भवेत् ॥

तत्र जातो जगन्नाथः कौस्तुभी हरिरच्युतः ।
तमेवोपवसेत्कालं कुर्यात्तत्रैव जागरम् ॥

अर्धरात्रे तु योगोऽयं तारापत्युदये सति ।
नियतात्मा शुचिस्स्नातः पूजां तत्र प्रकल्पयेत् ॥

विष्णुरहस्ये च -

अष्टमी कृष्णपक्षस्य रोहिण्यृक्षेण संयुता ।
भवेत्प्रोष्ठपदे मासि जयन्ती नाम सा स्मृता ॥ इति ।

परमसंहितायां च -

श्रावणे बहुळे पक्षे कृष्णाष्टम्यां विधूदये ।
प्राजापत्यर्क्षसंयुक्ता जयन्ती सा तु कथ्यते ॥

सनत्कुमारसंहितायां च -

श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप ।

रोहिणी यदि लभ्येत सा जयन्ती तिथिस्स्मृता ॥

अत्र श्रावण भाद्रपद नभस्यशब्दाः सिंह श्रावण भाद्रपदपराः । सिंहमासस्यैव कृष्णावतार कालत्वस्मृतेः । तथा श्री वाराहे श्रीधरीये बार्हस्पत्ये च -

रोहिणी तु यदाष्टम्यां कृष्णायां श्रावणे भवेत् ।

जयन्ती नाम सा प्रोक्ता न तु भाद्रपदाष्टमी ॥

अत्रापि श्रावणशब्दः सिंह श्रावणपरः । 'न तु भाद्रपदाष्टमी' ति निषेधः कन्याभाद्रपदपरः । तथा ब्रह्मसंहितायाम् -

अथातः संप्रवक्ष्यामि जयन्तीनिर्णयं परम् ।

सिंहराशिगते सूर्ये गगने जलदाकुले ॥

मासि प्रोष्ठपदेऽष्टम्यामर्धरात्रे विधूदये ।

बुधवारे वृषे लग्ने रोहिण्याश्चरमांशके ॥

शुभे हर्षण योगे च कौलपेन युते तथा ।

वसुदेवेन देवक्यामहं जातोऽस्मि पद्मज ॥ इति ।

अतः सिंहमासस्यैव कृष्णजन्मकालत्वाज्जन्माष्टमी च सिंहश्रावण एव ग्राह्या। तथा नारदीये च -

सिंहराशिगते सूर्ये श्रावणे मासि नारद।
कृष्णपक्षे तथाष्टम्यां बुधवारे निशार्धके।
वसुदेवेन देवक्यां जज्ञे कृष्ण श्चतुर्भुजः॥

अतश्च सिंहमास एव जन्माष्टमी च ग्राह्या। ज्योतिषार्णवे च -

श्रावण्यां प्रोष्ठपद्यां वा यदा सिंहगतो रविः।
जयन्त्याराधनं कुर्यात् न तु कर्कट कन्ययोः॥ इत्यादि।

अत्र जयन्तीशब्देन जन्माष्टमीचोच्यते।

'सिंहं गते दिवानाथे अष्टम्यामसिते तिथौ।
जयन्ती नाम लोकेऽस्मिन्नवतारदिनं हरेः॥'

इत्यष्टम्यां जयन्तीशब्दप्रयोगात् जयन्तीनिर्णयस्यैव जन्माष्टमी निर्णयत्वाच्च। अतो जयन्त्याराधनं जन्माष्टम्याराधनं चेति सिद्धम्। एवं कर्कटश्रावणे कन्याभाद्रपदे च जन्माष्टमी जयन्ती च विद्वद्भिर्न ग्राह्या अविहितकालत्वादिति सिद्धम्। अयमेव योगो जन्माष्टमी, तथा वाराहे -

सिंहेऽर्के रोहिणीयुक्ता नभः कृष्णाष्टमी यदि ।
तत्र जातो जगन्नाथः कौस्तुभी हरिरच्युतः ॥

अतश्च सिंहश्रावण एव कृष्णजन्मेति निर्णीतेस्तत्रैव जन्माष्टमी जयन्ती च ग्राह्या। 'सिंहेऽर्के रोहिणीयुक्ता नभः कृष्णाष्टमी यदि ।' इति जन्माष्टम्याः प्राधान्यं च सिंहार्क एव तस्या ग्राह्यत्वं च सुस्पष्टम्। किञ्च 'अहं जातोऽस्मि पद्मज '।, 'जज्ञे कृष्णश्चतुर्भुजः', 'तत्र जातो जगन्नाथः', 'तस्मात्पञ्चाननस्थेऽर्के', 'सिंहेर्के रोहिणीयुक्ता नभः कृष्णाष्टमी यदि', इति सिंहमास एव कृष्णजन्मस्मरणात् जन्मनिबन्धनत्वात् कृष्णाष्टमी च सिंहश्रावण एव ग्राह्येति प्रामाणिकानां पन्थाः । तिथिऋक्षतारतम्येन तयोस्स्वरूपमुक्तं नारदीये -

जन्माष्टमी जयन्तीति द्विविधा परिकीर्तिता ।
कृष्णपक्षेऽष्टमी पूर्णा श्रावणे रोहिणीयुता ॥

जन्माष्टमी सा विज्ञेया उपोष्या कृष्णतुष्टिदा ।
श्रावणे मासि संप्राप्ते कृष्णपक्षेऽष्टमीयुता ॥
संपूर्णा रोहिणीयुक्ता सा जयन्तीति कीर्त्यते ॥

एवं जन्माष्टम्यां तिथिप्राधान्यं जयन्त्यां नक्षत्रप्राधान्यं चावगम्यते ।

'सहयुक्तेऽप्रधाने' इतिस्मृतेः । 'किञ्च सिंहं गते दिवानाथे अष्टम्यामसिते तिथौ । जयन्ती नामलोकेऽस्मिन्नवतारदिनं हरेः ॥' इत्यादि ज्योतिषार्णववचनेषु तिथ्यृक्षयोरन्यतरस्यामन्यतरान्विता-यामन्यतरस्यां च जयन्तीशब्दप्रयोगो जयन्त्यनुष्ठानेनैव उभयसिद्धिरिति ज्ञापनार्थः । अतो जयन्तीकाल एव जन्माष्टमी-कालः । अत्रेदमन्तरम् - अष्टमीरोहिण्योरहोरात्रयोगो मुख्यतमः । चन्द्रोदये तयो र्योगो मुख्यतरः । बुधवारे मुहूर्तमात्रयोगो मुख्यः । एवंयोगाभावेऽपि सिंहार्के शुद्धकेवलाष्टमी केवला रोहिणी च ग्राह्येति । अत्र वाराहे -

अष्टमी रोहिणीयोगो मुहूर्तं वा दिवा निशम् ।
मुख्यकाल इतिख्यातस्तत्र जातो हरिस्स्वयम् ॥

परमसंहितायां च -

श्रावणे मासि लग्नस्था शशिना सह रोहिणी ।
जयन्ती नाम पुण्यास्यादष्टम्या सहिता न वा ॥

नारदीये च -

उदये चाष्टमी किंचित् नवमी सकला यदि ।
प्राजापत्यर्क्षसंयुक्ता बुधवारेण संयुता ॥

तस्यां दत्तं हुतं जप्तं पूजितं कोटिसंमितम् ।
उपवासश्च कर्तव्यो महापापप्रणाशनः ।।

स्मृत्यन्तरे च -

प्राजापत्यर्क्षसंयुक्ता मृगेण सहितः शशी ।
भवेच्च बुधसंयुक्ता जयन्ती सा विशिष्यते ।।

एवं सिंहश्रावणयोगाभावे तु सिंहभाद्रपदे ग्राह्या । तथा वसिष्ठ संहितायाम् -

श्रावणे वा नभस्ये वा रोहिणी सहिताष्टमी ।
यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्तिता ।।

श्रावणे न भवेद्योगो नभस्ये तु भवेद् ध्रुवम् ।
तयोरभावे योगस्य तस्मिन्वर्षे न सम्पदः ।।

अयमनयोरत्र विवेकः- रवेराश्यन्तर संक्रमावलंबनो मेषादिस्सौरः। मेषादिषु दर्शान्तश्चैत्रादिश्चान्द्रः । एतदुभयनिबन्धनो मधु-माधवादिः । अतस्सिंहे दर्शात् पूर्वो नभा श्रावणश्च दर्शात्परो नभस्यो भाद्रपदश्च । अतः सिंहश्रावणे योगाभावे सिंहनभस्ये प्रायेण योगो भवति । ततश्च सिंहश्रावणे योगे तत्रैव कुर्यात् ।

तत्रायोगे सिंहभाद्रपदे कुर्यात् । नरशब्दस्सर्वाधिकारज्ञापनार्थः । न संपदः - सम्पद्यत इति संपत् संनिपातः सम्पदादित्वात् क्विप् । जन्माष्टमीजयन्त्योरनुष्ठानयौगपद्यसौष्ठवं नास्तीत्यर्थः । यद्वा नभोनभस्ययोस्तिथिऋक्षयोगाभावे मुख्यो जयन्तीयोगो नास्ति । शुद्धा महाफलेत्याह मार्कण्डेयः -

प्राजापत्येन संयुक्ता कृष्णा नभसि याष्टमी ।
जयन्ती नाम सा प्रोक्ता सा ह्युपोष्या महाफला ॥

पद्मसंहितायां च -

श्रावणे मासि कृष्णे च पक्षेऽष्टम्यां तिथौ हरेः ।
अर्धरात्रे ततस्तस्मिन् सर्वकल्याणमाचरेत् ।
तिथ्ययोगेऽपि नक्षत्रे केवलेऽर्चनमिष्यते ॥

नक्षत्रे सप्तमीवेधस्य त्याज्यत्वान्नवम्यां रोहिणीयोगेऽपि हरेरर्चनं कुर्यात् । न सप्तमीयुक्ते नक्षत्रे । चन्द्रोदये सप्तमीयोगे जयन्त्याः पुण्यनाशकत्वस्मृतेः । अतश्चन्द्रोदये सप्तमीयुक्ता रोहिणी त्याज्यैव । शुद्धाभावेऽपि चन्द्रोदययोगो वैष्णवेतरैर्ग्राह्यः । तथा नारदीये -

पूर्वविद्धा जयन्ती वा परविद्धाथवा भवेत् ।
चन्द्रोदयेऽष्टमीयुक्ता रोहिणीसहिता यदि ॥

श्री वाराहे -

दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥

विद्धाष्टमीयुक्तां चन्द्रोदयव्याप्तां रोहिणीं कुर्यात् । न परदिने दिवामात्रयुक्तामित्यर्थः । रात्रियोगे व्यवस्थोक्ता नारदीये ।

चन्द्रोदयादधस्ताद्वा परस्ताद्वा कलान्विता।
रोहिणी चाष्टमीयुक्ता ग्राह्या सर्वैरुपोषणे ॥

अयमर्थः -

जयन्ती द्विविधा ज्ञेया शुद्धा विद्धेति तद्विधा।
विद्धा तु सप्तमीयुक्ता शुद्धा तु नवमीयुता ॥
रोहिणी कृत्तिकायुक्ता विद्धा शुद्धा परान्विता ॥

तद्विधा - शुद्धाविद्धयोः प्रकारः । तत्परं पद्यमुत्तरमिति तद्विधोक्ता । तत्र या कृत्तिकाविद्धा रोहिणी वा सप्तमीविद्धाष्टमी वा चन्द्रोदया-दर्वागेव प्रवृत्ता चन्द्रोदयव्याप्ता सैव ग्राह्या । एवं परदिने चन्द्रोदयादूर्ध्वं कलामात्राप्यस्ति चेत् तदा शुद्धा सैव ग्राह्येति ।

तथा श्री विष्णुधर्मे -

मध्यरात्रादधश्चोर्ध्वं कलामात्रा तु याष्टमी ।
सा जयन्तीति विख्याता पुण्यानामुत्तमोत्तमा ॥

रोहिणीयुक्तेति शेष: । तथा श्री वाराहे -

सिंहेऽर्के रोहिणीयुक्ता नभ:कृष्णाष्टमी यदि ।
रात्र्यर्धपूर्वापरगा जयन्ती कलयापि वा ॥

कलयापि रात्र्यर्धपूर्वापरगेत्यन्वय: । तथा -

अर्धरात्रादधश्चोर्ध्व मेकार्धघटिका यदि ।
रोहिणी साष्टमी ग्राह्या उपवासव्रतादिषु ॥

(एषामपि स एवार्थ: । केवल पूर्वदिने चन्द्रोदयात्पूर्वमेकघटिका-विद्धायां, शुद्धायां पर दिने तदूर्ध्वमर्धघटिकेतिव्यवस्थेति केचित् । उभयत्र एकार्धघटिकेत्यन्ये ) कलास्मरणं कैमुत्यनीत्या घटिकामेव प्रतिपादयति । अपरे तु चन्द्रोदयवेधशंकाकलङ्कगन्धविधूनने तात्पर्यं कलास्मरणस्येति संगिरन्ते । अतश्चन्द्रोदयवेधस्त्याज्य एव । तथा नारदीये -

चन्द्रोदये यदा विद्धा सप्तम्या साष्टमी तिथि: ।
सप्तमीसंयुता त्याज्या तदा पुण्यविनाशिनी ॥

रोहिणी कृत्तिकायुक्ता त्याज्या चन्द्रोदये यदि ।
सर्वविद्धेति सा प्रोक्ता त्याज्या सर्वैरुपोषणे ॥

तिथिऋक्षयोरन्यतरस्यान्यतरवेधेऽप्यविद्धाप्राधान्येनोपवासे प्रसक्ते तन्निषेधार्थं पृथक्पृथग्वेधत्यागवचनम् एकैकवेधेऽपि योगस्त्याज्य इत्यर्थः । चन्द्रोदये सप्तमीवेधे कृत्तिकावेधे वा सति श्चश्चन्द्रोदयव्याप्ताऽव्याप्ता वा शुद्धैव ग्राह्येति भावः । तथा ब्रह्मसंहितायाम् -

रोहिणी चाष्टमीयुक्ता सप्तम्या कलया युता ।
सा तिथिर्निष्फला त्याज्या वर्जयेत्तां प्रयत्नतः ॥

नवमी रोहिणीयुक्ता ह्यष्टम्या कलया युता ।
उपवासश्च कर्तव्यो महापापप्रणाशनः ॥

नहीदं "चन्द्रोदये यदा" इत्यादि नारदीयं वचनद्वयं केवलाष्टमी रोहिणीविषयम् तयोर्दिवसवेधस्य च त्याज्यत्वेनोदाहरिष्यमाण-वचनविरोधात्प्रकरणविरोधाच्च । तत्र ह्यष्टमीयुक्ता रोहिणी जयन्तीत्युपक्रम्य तद्द्वैविध्यमभिधाय विद्धाभिधाने कृत्तिका सप्तमीवेधत्यागाभिधानात् । अनन्तरं च -

सर्वेषामेव वर्णानामाश्रमाणां विधूदये।
अष्टमी रोहिणीयुक्तदिनमेतत्प्रशस्यते ॥

इति विद्धां प्रशस्य 'एषा जयन्ती विद्धोक्ता' इत्युपसंहारात् उपक्रमोपसंहारन्यायेन पूर्वापरवचनयोस्तिथिऋक्षोभयपरत्वेन सन्दंशन्यायेन च वेधस्याष्टमीरोहिणीयोगविषयत्वावगतेर्न [1]कतमोऽवकाशलेश:। तर्हि जन्माष्टम्याश्चन्द्रोदयवेधो न स्यात्। मैवम् - 'रोहिणीसहिता कृष्णा', 'रोहिणीसहिताष्टमी' इत्यादि वचनैः रोहिणीयुक्ताष्टम्या जयन्तीत्वाभिधानाद् रोहिणीयुक्ताष्टमी जन्माष्टमीति नारदीयोक्तेश्च। जन्माष्टम्या जयन्तीत्वस्मरणप्रयोजनं प्रागेवाभ्यधिष्महि। किञ्च चन्द्रोदयादधोवेधेऽपि 'विद्धाष्टमी द्विजै ग्रांह्या सप्तम्या रोहिणी यदि' इति रोहिणीयुक्ताया विद्धाष्टम्या ग्रहणस्मरणात् 'चन्द्रोदयादधस्ताद्वा' इत्यादिवचनानां च तिथिऋक्षयोगविषयत्वाच्च केवलाष्टमीरोहिण्योर्दिवावेधस्त्याज्य एव। तथा नारदीये -

चन्द्रोदयादधस्ताद्वा दिवा वापि च सप्तमी।
न त्याज्या रोहिणी युक्ता ह्यष्टमी नान्यथा शुभा॥

1. कतमोऽवकाशलेश: → कथमवकाशलेश: (पा)

अन्यथा रोहिणीयोगाभावे सप्तमी विद्धाष्टमी न शुभेत्यर्थः । विद्धाग्रहणे वचनाभावात् । 'विद्धाचेत्सा तु सप्तम्या शस्ता जन्माष्टमी तिथिः ।' इति वचनं न केवलाष्टमीविषयम् । सेति तच्छब्देन 'जयन्ती श्रावणी कृष्णा रोहिण्या सहिताष्टमी' इति पूर्वार्धोक्तरोहिणीयुक्ताष्टमीपरामर्शात् । तच्च 'अर्धरात्रादधस्सा हि', 'रात्र्यर्धपूर्वापरगा' इत्युदाहृतवचनेषु स्पष्टम् । ततश्च 'जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत्',

'जन्माष्टमी जयन्ती च शिवरात्रिस्तथैव च ।
पूर्व विद्धैव कर्तव्या तिथिभान्ते च पारणम् ।।'

इत्यादिवचनं चैतद्विषयं द्रष्टव्यम् । अन्यथा वेधविधिनिषेधविरोधो वेधसापि दुर्निरोधः स्यात् । अतः केवलाष्टम्या दिवावेधस्त्याज्य एव । स्मृत्यन्तरे च -

कृष्ण जन्माष्टमी लोके प्रसिद्धा पापनाशिनी ।
वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।।

एतत्समानार्थं 'पूर्वविद्धा न कर्तव्या' इति पाठे तद्वचनं । तथोत्तरत्र केवलयोर्दिवावेधत्यागे वचननिचयः प्रदृश्यते । किञ्च निशीथयो-र्योगे विद्धा चन्द्रोदययुक्तापि त्याज्या । तथा नारदीये-

चन्द्रोदयेऽष्टमी ब्राह्मी परस्मिन्दिवसे यदि ।
तदाष्टमीं पूर्वविद्धां सर्क्षां वापि परित्यजेत् ॥

न चेत्परस्मिन्दिवसे पूर्वविद्धामुपोषयेत् । अत्र विशेष उक्तस्तत्रैव -

अविद्धा बुध वारे चेत् पूर्वविद्धां परित्यजेत् ।
अन्यदा न परित्याज्या जन्मकालान्विता यतः ॥

'ब्राह्मी' - रोहिणी । 'अन्यदा' - बुधव्यतिरिक्तवारेषु । बुधवारे तिथिऋक्षयोर्दिवास्वल्पयोगेऽपि पूर्वदिने चन्द्रोदययोगोऽपि त्याज्य इत्यर्थः । चन्द्रोदययोगबलाद्विद्धाग्रहणे दोषस्तत्रैव दर्शितः ।

अविद्धा या जयन्त्युक्ता बुधयुक्ता परा च सा ।
बुधवारयुतां त्यक्त्वा जयन्तीं पुण्यवर्धनीम् ॥

अन्यवारयुतां विद्धां न गृह्णीयात्कदाचन ।
सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥

चन्द्रोदययोगादपि बुधवारयोगस्य विशिष्टत्वादित्यर्थः । स्मृत्यन्तरे च -

प्राजापत्यर्क्षसंयुक्ता मृगेण सहितश्शशी ।
भवेच्च बुधसंयुक्ता जयन्ती सा विशिष्यते ॥

जयन्तीकल्पे च -

उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
प्राजापत्यर्क्षसंयुक्ता बुधवारेण संयुता ॥

सैवोपोष्या महापुण्या वर्षकोटिषु दुर्लभा ।
जयन्ती नाम सा प्रोक्ता विष्णोः प्रीतिकरी तिथिः ॥

पादत्रयबुधाष्टम्यां नवमीपादसंयुता ।
त्रिपादरोहिणीयुक्ता पुण्या सा च तिथिर्भवेत् ॥

एकपादाष्टमीयुक्ता नवमी बुधसंयुता ।
रोहिणी पादमात्रा सा जयन्ती चोत्तमोत्तमा ॥

अत्र त्रिपादपादादिग्रहणं सर्वथा बुधवार योगोऽतिप्रशस्त इति ज्ञापनार्थम्। अत एव नारदीये - 'उदये चाष्टमी किञ्चित्' इत्युक्तम् । तथात्रापि 'पुण्या सा च तिथिर्भवेत्', 'जयन्ती नाम सा' इति च भेदेन स्मरणाज्जन्माष्टमी जयन्ती च पूर्वत्र परत्र वा दिने बुधवारयुक्ता प्रशस्तेति गम्यते । एवं सोमवारे चेत्युक्तं नारदीये -

अष्टमी रोहिणी किञ्चिन्नवमी सोमवारगा ।
संपूर्णा सौम्यवारे चेत्सा जयन्ती शुभा स्मृता ॥

अष्टमी रोहिणी वा स्यान्नवम्यां सौम्यवारगा ।
बुधवारे जयन्ती स्यात् तस्यामेवार्चयेद्धरिम् ॥

किञ्च यदा पूर्वेद्युर्दिवोत्तरेद्यूरात्रौ च रोहिणी नास्ति, पूर्व विद्धा-चाष्टमी तदा रात्रियुक्ता रोहिण्येव ग्राह्या । तथा वाराहे -

दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥

स्मृत्यन्तरे च -

विना ऋक्षं न कर्तव्या सप्तमीसंयुताष्टमी ।
कार्या विद्धापि सप्तम्या रोहिणीसंयुताष्टमी ॥

श्चश्चन्द्रोदये नवमीयुक्तकेवलाष्टमीयोगेऽपि पूर्वेद्युर्निशीथे रोहिणीयुक्ता विद्धाष्टम्येव ग्राह्या रोहिणीविरहे न ग्राह्येत्यर्थः । एवं संयोगिकवेधो निरूपितः । एवं योगाभावे तिथिऋक्षयोरेकैकस्य वेधनिरूपणपूर्वकं तयोः पृथक्पृथग्ग्रहणे प्रमाणं प्रदर्श्यते अत्र स्कान्दे -

श्रावण्यां कृष्णपक्षे तु घटीषष्टिर्यदाष्टमी ।

त्रिमुहूर्तं तिथेर्वृद्धौ सुनिरीक्ष्य परीक्षयेत् ।
सा तु जन्माष्टमी ख्याता भुक्तिमुक्तिफलप्रदा ॥

दिवा सप्तमी वेधे श्वोनवम्यां त्रिमुहूर्ताष्टमीयोगो ग्राह्य इत्यर्थः । पाद्मे च - 'श्रावणे मासि कृष्णे च' इति । परमसंहितायां च - 'श्रावणे मासि लग्नस्थे' इति । नारदीये -

चन्द्रोदयेऽष्टमी पूर्णा रोहिणी न भवेद्यदि ।
तदा जन्माष्टमी ज्ञेया न जयन्तीति कथ्यते ॥

संपूर्णा रोहिणी यत्र अष्टमी न भवेद्यदि ।
रोहिण्यामेव कुर्वीत कृष्णजन्मार्चनादिकम् ॥

चन्द्रोदये रोहिणी न भवेद्यदीत्यन्वयः, पूर्णा-अहोरात्रव्यापिनी न जयन्तीति रोहिण्ययोगादित्यर्थः । श्वोऽष्टम्यभावेऽपि संपूर्णा रोहिणी यत्र यस्मिन्दिने सैव ग्राह्येत्यर्थः । अनेन जन्माष्टम्या जयन्ती मुख्येति प्रतीयते । अत एव हि लोके प्रायशो जयन्त्येवानुष्ठीयते । नारदीये -

तिथिरेकगुणा प्रोक्ता नक्षत्रं तु चतुर्गुणम् ।
कुर्यात्सर्वाणि कर्माणि जन्मनक्षत्रगे विधौ ॥

रोहिणी जन्मनक्षत्रं कृष्णस्य शुभदं भवेत् ।
विशेषाद्रोहिणी चन्द्रे गृहस्थो व्रतमाचरेत् ।।
रोहिणीसहितश्चन्द्रो गृहस्थानां समृद्धिदः ।

अत्र विधूदयप्राशस्त्यात् कृत्तिकावेधो न दोष इति भ्रमितव्यम् । श्चश्चन्द्रोदययोगविषयत्वादेषाम् । सप्तमीकृत्तिकावेधस्य त्याज्यत्वाच्च । तथा वसिष्ठः -

अष्टम्यां वा नवम्यां वा दशम्यां वाऽथवा पुनः ।
रोहिणी तु यदा कृष्णपक्षे ग्राह्याग्निवर्जिता ।।

अग्निवेधो हि रोहिण्यां हन्ति पुण्यं पुरातनम् ।
तस्मात्पञ्चाननस्थेऽर्के घटिकैकापि शस्यते ।।

नात्राधिकारिभेदेन संकोचः विषयविशेषानुक्तेः । सामान्येनाग्निवेधत्यागपरत्वात् । ब्रह्मकैवर्ते च -

सप्तमी वाष्टमीयुक्ता न सप्तम्या युताष्टमी ।
सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा ।।

पुराणान्तरे च -

एकादश्यां जयन्त्यां च व्रते [illegible] ।
पूर्वविद्धा तिथिर्वर्ज्या पूर्वपुण्यविनाशिनी ।।

स्कान्दे च -

प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्धं भवेद्यदि ।
तदष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा ॥

अष्टम्यां वा नवम्यां वा दशम्यां यदि रोहिणी ।
मुहूर्तमपि लभ्येत सा जयन्तीति कथ्यते ॥

कला काष्ठा मुहूर्तापि यदा जन्माष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्यात्सप्तम्या संयुता न हि ॥

इत्यादिभिः पूर्वविद्धानिषेधमुखेन परदिनोपवासपरैः परदिनविधिमुखेन पूर्वदिन निषेधपरैरेतैर्वचनैः केवलयोस्तिथिनक्षत्रयोर्दिवा किंचिन्मात्रवेधेऽपि जन्माष्टमी जयन्ती च न ग्राह्या सर्वैरिति सिद्धम् । विषयभेदानुक्तेः । ननु -

वासरे वा निशायां वा यत्र कुत्रापि रोहिणी ।
विशेषेण नभोमासे सैवोपोष्या मनीषिभिः ॥

इति स्मरणात्कथं विद्धा त्याज्येतिचेदहो तव सामर्थ्यम् । कोऽर्थः ? वचनार्थो ज्ञात इत्यर्थः । तर्हि तदर्थः समर्थनीयः पूर्वेद्युर्निशावेधे श्वो रात्रौ रोहिणी स्यात् दिवावेधे तु परेऽहन्यपि दिवा सा स्यात्तस्मा-

दुभयत्र दिवा रात्रौ वास्तु रोहिणी ग्राह्या न विद्धेत्यर्थः । अन्यथा पूर्वोदाहृतवचननिचयवैयर्थ्यापत्तेरित्यलम् । ननु पूर्वविद्धात्यागपरं परदिनग्रहणपरं चेदं वचनजातं बुधवारविषयमितिचेदहो तव प्रागल्भ्यम् । आकाशमपि निजरीगरीषि उपालंभोऽयं न विभ्रमत्वात् । तव विजृंभणस्यालं संभावनया । अर्थस्समर्थ्यताम् । तिथिऋक्षोभययोगे सत्येव बुधवारग्रहणस्य तेषु वचनेषु सुस्पष्टत्वेनान्यतर कलादियुक्तपरदिनग्रहणपरवचनानां बुधवारविषयत्वानुपपत्तेः । तस्मात्तेषां विद्ध केवलाष्टमी कलादियुक्तपरदिनग्रहणपरत्वमकामेनाप्यंगीकार्यम् । 'अविद्धा बुधवारे' इति वचनाद्विद्धाष्टमीग्रहणमिति चेन्न - केवलविद्धाष्टमीग्रहणपरत्वाभावात्तस्य विद्धाग्रहणस्य रोहिणीयोग निबन्धनतयैवानेकवचनसिद्धेः 'जन्मकालान्विता यतः' इति रोहिणीयुक्ताष्टमीपरत्वावगमाच्च । 'मुहूर्तमपि संयुक्ता सैवोपोष्या महाफला' इति वचनमेव रोहिण्ययोगेऽपि विद्धाग्रहणज्ञापकमिति चेन्न तस्य योगप्राशस्त्यमात्रपरत्वात् 'विना ऋक्षं न कर्तव्या' इत्यादिवचनशतेन रोहिणीयोगे सत्येव विद्धा ग्राह्या नान्यथेति निश्चयाच्च । ननु कथं विद्धात्यागः, श्वो निशीथेऽष्टम्यभावादिति चेन्मैवम् -

'मुहूर्तमपि संयुक्ता संपूर्णा साष्टमी भवेत् ।
पश्चाद्भागकलामात्रं कर्माद्यन्तावसानिकम् ॥'

इत्युदयकालीनाष्टमीक्षणस्याहोरात्रव्याप्तत्वावधारणात्। वृक्षोपरि स्थित्वा मूलच्छेदे कुत्र निपतिष्यतीति किं न विचार्यम् । अतः केवलविद्धाग्रहणे प्रमाणाभावो विद्धावर्जनं च बहुप्रमाण-सिद्धमिति तूष्णीमुष्णीषे क्वचिदास्वेत्यलम्। ननु-

कृष्णावतारकाले तु व्याप्तां सर्वाघनाशिनीम् ।
जयन्तीं यस्त्यजेन्मोहात्सर्वाभीष्टफलप्रदाम् ॥
तस्यायुः श्रीश्च पुत्राश्च विनश्यन्ति न संशयः ।

इत्यादिवचनाद्विद्धात्यागे प्रत्यवायस्स्यादितिचेत् मैव-मायुष्मन्वादीः । दत्तोत्तरत्वात् । तवापि बुधवारयोगग्रहणे कृष्णावतारकालव्याप्तविद्धात्यागे दोषः स्यादिति चेन्न-वेहितातिक्रमविषयो हि प्रत्यवायः। अतो विद्धात्याग शुद्धाग्रहण-वेधिबलादेव न तत्प्रसंग इति चेदत्रापि तुल्यम्। नह्यस्माकं विद्धा वेहिता, अपि तु निषिद्धैव। तस्मादस्माकं च विद्धात्यागे न दोष-ान्धः। क्वचिच्छुद्धैकादशीत्यागवत् सर्वदा सर्वथा विद्धैकादशी-यागवच्च। 'अन्येषु शुभवारेषु रात्राविन्दूदये शुभे। कृष्णावतार-

काले तु' इति स्मरणाद्बुधव्यतिरिक्तवासरविद्धात्यागविषयः प्रत्यवायः। अतो न प्रतिबन्दीति चेन्न - अन्यवारेषु च 'विना ऋक्षं न कर्तव्या', 'नास्ति चेद्रोहिणीकला,', 'विद्धाष्टमी द्विज त्याज्या' इत्यादि वचनैः रोहिण्ययोगे केवलाष्टमी सप्तमीविद्धा त्याज्येति निश्चयाच्च। एवं योगे पूर्वेद्युर्निशीथव्याप्तशुद्धाष्टमीत्यागे दोषापत्तेरनिवार्यत्वात् तत्रापि निशीथयोगाभावे परैव ग्राह्या, विधिबलान्न त्यागदोष इति चेत् - तर्ह्यस्माकमपि 'शुद्धाष्टमीं विना वापि' इति शुद्धाया अभावे मृगशीर्षयुक्ततिथ्यन्तर विधानबलादेव न प्रत्यवायप्रसंग इति पश्यतु भवान्। यथा पृथक्कुर्यादिति विधिबलाद् 'विधिघ्नस्तेन भवति' इत्युक्तदोषाभावः। ननु विद्धायां बुधवारयुक्तायां युष्माकं कथमुपवास इति चेत् आः! चोद्य-मनवद्यमिदं कृतम्। श्रूयतामुत्तरम्।

'चन्द्रोदयेऽष्टमीमुक्ता रोहिणी बुधवारगा।
विद्धा शुद्धापि वा ग्राह्या ह्युपवासार्चनादिषु'॥

इतिवचनादिति चेन्न - अत्र वैष्णवविषयत्वाप्रतीतेस्तेषां सर्वप्रकारवेधत्यागस्मृतेर्यद्यपीदं साधारणम्। तथापि 'जयन्ती

द्विविधा ज्ञेया' इत्यादिना विद्धामभिधाय 'एषा जयन्ती विद्धोक्ता ह्यविद्धां शृणु नारद' इत्युपक्रम्य बुधवारयोगं बहुशः प्रशस्य -

तस्माज्जयन्ती विज्ञेया बुधवारयुता शुभा ।
एषा जयन्ती शुद्धाख्या भुक्तिमुक्तिफलप्रदा ॥

इति बुधवारयोगातिशयेन विद्धाया अपि शुद्धत्वाभिधानात् ,

शुद्धाष्टमीं विना वापि शुद्धर्क्षस्याप्यभावतः ।
मृगेण च दशम्या च युक्ता ग्राह्या तु वैष्णवैः ॥

इति ब्रह्मसंहितायां शुद्धाया अभाव एव वैष्णवैः परदिनग्रहण-स्मरणाच्च तस्य वैष्णवविषयत्वं सुगमम् । वेधे बुधवारयोगत्याग-वचनमस्तिचेत्परदिने चन्द्रोदयव्याप्तिविषयं व्यवस्थापनीयम् । ननु तिथिऋक्षयोरन्योन्ययोगेन जयन्तीत्वं जन्माष्टमीत्वं च स्मृतिसिद्धं केवलयोः कथं तदिति चेन्न - योगाभावेऽपि तयोस्तथात्वस्य वचनसिद्धत्वात् । तानि वचनानि पूर्वमेवोदाहृतानि तर्हि किं योगेन- मैवम् । मुख्यत्वज्ञापनार्थत्वात्तस्य । तर्हि तदयोगे केवलयोर्गौणत्वमापततीति चेन्न- 'तिथिरेकगुणाप्रोक्ता नक्षत्रं तु चतुर्गुणम्' इति नारदीयस्कान्दादिवचनात् 'अष्टम्या सहिता न वा', 'रोहिण्यामेव कुर्वीत कृष्णजन्मार्चनादिकम्' इति परमसंहिता-

नारदीयादिवचनाच्च रोहिण्या मुख्यत्वावगतेः । एवमेव हि भृगोश्च मतम् -

'जनने जन्मनक्षत्रं मरणे तिथिरुच्यते ।
तस्माज्जन्मर्क्षमेकं स्यात्कृष्णजन्मदिने भृगोः'॥

एवमेव हि नारदीये च तद्वैशिष्ट्यमुक्तम् ।

कुर्यात्सर्वाणि कर्माणि जन्मनक्षत्रगे विधौ ।
रोहिणी जन्मनक्षत्रं कृष्णस्य शुभदं भवेत् ॥

अत एव हि लोके प्रायशो जयन्त्येवानुष्ठीयते । किञ्च-

संपूर्णा रोहिणी यत्र अष्टमी न भवेद्यदि ।
रोहिण्यामेव कुर्वीत कृष्णजन्मार्चनादिकम् ॥

अष्टम्यास्सप्तमीविद्धत्वेन त्याज्यत्वात् नवम्यां तदभावेन तस्मिन्वर्षे जन्माष्टम्यनुष्ठानाभावे प्राप्ते रोहिण्यामेव तदनुष्ठानविधानाच्च जयन्ती श्लाध्यतरा । तर्हि जन्माष्टम्या गौणत्वमिति चेन्न - विष्णुशृंखलाख्ययोगाभावेप्येकादश्या इव मैत्राद्ययोगेऽपि द्वादश्या इव च मुख्यत्वात् । योगकथनं तु प्रायिकाभिप्रायं संभवदभिप्रायं वा । वारयोगकरणांशलग्नोक्तिवत् अन्यथाति-

प्रसंगात् । नहीदानीं तदानीन्तन युगदेशादिसंभवः । तथापि न गौणत्वम् । वचनादुभयोरनुष्ठानं तत्र यथा विद्धाधिकैकादशी-युक्ताया द्वादश्याः श्रवणयोगेऽपि दशमीवेधनिषेधपरवचनानां न तत्परत्वं योगस्यानियतत्वात् वहुवचनसंकोचापत्तेश्च तथात्रापि विद्धानिषेधवचनानां बुधवारयोगपरत्वं नोपपद्यते सामान्येन वेधनिषेधात् । तदेवमत्रापि वेधनिषेधग्रहणपरवचनाना-मविरोधायाधिकारिभेदेन व्यवस्थाकल्पनमेव न्याय्यम् । तच्च वचनसिद्धम्। नहि वाचनिकेऽर्थे युक्तयः क्रमन्ते, नहि वचनविरोधे न्यायः प्रभवतीति न्यायविदः । अत्रायं संग्रहः - केवलयोः जन्माष्टमीजयन्त्योर्दिवसवेधस्सर्वैस्त्याज्यः । विशिष्टयोस्तु तयोर्निशीथादधोवेधो वैष्णवेतरैर्ग्राह्यः। तैश्चन्द्रोदय वेधस्त्याज्यः । वैष्णवैः पुनस्सर्वप्रकारवेधस्त्याज्य इति, एवं केवलयोर्वेधत्यागस्य सर्वविषयत्वनिश्चयात् तिथिऋक्षयोर्योगे 'चन्द्रोदयादधोवेधो ग्राह्यस्सर्वैरुपोषणे' इति विद्धोपवासे प्राप्ते वैष्णवविषये तदपवाद उच्यते । अत्र -'कृष्णाष्टमी नभस्ये वा पूर्व विद्धारुणोदये । सरोहिणी जयन्तीति प्रोक्ता चन्द्रोदये यदि।।' इत्यनिरुद्धसंहितोक्तः अरुणोदये सप्तम्या वा कृत्तिकाभिर्वा विद्धो रवेरुदयाद्दिवारात्रं

व्याप्तो निशीथेऽष्टमी रोहिणीयोगो मुख्यतमः । सिंहश्रावणे सिंहभाद्रपदे वा तदलाभे दिनैकदेशयुक्तोऽष्टमीरोहिणीयोगो मुख्यतरः । केवला च रोहिणी मुख्या तत्र पूर्वेद्युर्वेधे श्वो रोहिणी-नवमीयोगो ग्राह्यः । तथा वाराहे-

अष्टमीरोहिणीयोगो मुहूर्तं वा दिवानिशम् ।
मुख्यकाल इति ख्यातस्तत्र जातो हरिः स्वयम् ॥

मासद्वये यद्यलब्धो योगस्तस्मिन्दिवानिशम् ।
नवमी रोहिणीयोगः कर्तव्यो वैष्णवैर्नरैः ॥

तथाऽनिरुद्धसंहितायां च-

अष्टमी नवमीयोगे रोहिण्यां च विधूदये ।
महानिशि नभस्ये च कृष्णपक्षेच्युतोऽजनि ॥

एवमष्टमीनवमीयोगस्यैव जन्मकालत्वस्मृतेस्सप्तमीविद्धाष्टमी न जन्मकाल इति सिद्धम् । अतो दिवा वा निशि वा शुद्धाष्टमी-रोहिणीयोगः प्रशस्तः । वेधे तु सुदूरं त्याज्यः । तथा ब्रह्मकैवर्ते-

जयन्ती या प्रयत्नेन सप्तमीसंयुताष्टमी ।
सा सर्क्षापि न कर्तव्या सप्तमीसंयुताष्टमी ॥

अविद्धायां हि सर्क्षायां जातो देवकिनन्दनः ।

'सप्तमी संयुतास्टमी' इतिपुनर्वचनं त्याज्यतिथिज्ञापनार्थम् ।

स्मृत्यन्तरे च -

'पूर्वविद्धा यथा नन्दा वर्जिता श्रवणान्विता ।
तथाष्टमीं पूर्वविद्धां सर्क्षां वापि परित्यजेत् ॥'

'अविद्धायां हि सर्क्षायां जातो देवकिनन्दनः' इत्यत्र 'अर्धरात्रादधस्सा हि' इत्यादि वचनाविरोधाय ब्रह्मकैवर्तादिवचनं वैष्णवविषयं समर्थनीयम् । ननु

'अविद्धा बुधवारे चेत्पूर्वविद्धां परित्यजेत् ।
अन्यथा न परित्याज्या जन्मकालान्विता यतः ॥'

इति वचनात्कथं विद्धात्याग इति चेत् किं क्षतक्षतेन। अधिकारिभेदेन व्यवस्थिततत्वात्। अन्यथा विरोधो दुर्निरोधः । अतो विषयभेदादविरोधस्सुवचः । न परित्याज्या रोहिणीयुक्तेतिशेषः ।

ब्रह्मसंहितायां च -

रोहिणी चाष्टमीयुक्ता सप्तम्या कलया युता ।
सा तिथिर्निष्फला त्याज्या तस्यां नोपवसेद् बुधः ॥

नवमी रोहिणीयुक्ता अष्टम्या कलया युता ।
उपवासस्तु कर्तव्यो महापापप्रणाशनः ॥

अतश्च दिवा सप्तमीवेधस्त्याज्यः । यदा रोहिणी कृत्तिकाविद्धा तदोपोष्यदिनमाह तत्रैव -

‘कृष्णायां श्रावणेऽष्टम्यां स्यात्स्वल्पा रोहिणी यदि ।
तदा तां कारयेद्विद्वान् मृगेण नवमीयुताम् ।।

‘वासरे वा निशायां वा’ इति दिवा कृत्तिकावेधे निशीथेऽष्टमी रोहिणीयोगेऽपि परदिनमेव ग्राह्यम् । तथा तत्रैव-

दिवसे कृत्तिकायुक्ता रोहिणी चाष्टमीयुता ।
सा तिथिर्निष्फला त्याज्या वर्जयेत्तां प्रयत्नतः ।।

यदा पूर्वेद्युः कृत्तिकावेधः श्वो दिवैव रोहिणी तदा जन्मकाले रोहिण्यभावेऽपि सा दिवागतैव ग्राह्या । तथा तत्रैव-

वासरे रोहिणीयुक्ता निशायां रोहिणीं विना ।
दिवासंगतरोहिण्यामुपवासं समाचरेत् ।।

तदेवं कृत्तिकासप्तम्यन्यतरवेधः श्चश्चन्द्रोदये तिथिनक्षत्रयोगाभावेऽपि परदिनमेव ग्राह्यमिति सिद्धम् । तद्योगयुक्तमपि पूर्वदिनं त्याज्यमेवेति सिद्धम् । तथा जय[illegible]संहितायां च -

वर्जनीया प्रयत्नेन कृत्तिकासंयुताष्टमी ।
सप्तम्या संयुताष्टम्यां त्यजेदृक्षं च पद्मज ।। इति ।।

किञ्च -यदाष्टम्यां सप्तमीवेधः श्वश्च कृत्तिकावेधस्तदा नवम्यां रात्रौ मृगशीर्षदशमीयोगो ग्राह्यः । तथा तत्रैव -

'नवमी च दिवायुक्ता मृगेण दशमीयुता ।
पूर्वे तु दोषसंयुक्ते तस्यामेवोपवासयेत् ॥'

अतो विद्धात्यागपरवचनानां निशीथवेधपरत्वकथनं वचनान्तराज्ञानविजृंभितम् आग्रहकृतं वा । निशीथादधो विद्धाग्रहणे 'विशेषाद्रोहिणीचन्द्रे गृहस्थो व्रतमाचरेत्', 'रोहिणी सहितश्चन्द्रो गृहस्थानां समृद्धिदः' इति धनधान्यायुरादिसमृद्धिहेतुत्वोक्तेरेकादशीवत् सकामैर्विद्धा ग्राह्या । निष्कामैः शुद्धेति निर्णयः । किञ्च विद्धानुष्ठातृबाहुल्यदर्शनाद्वा लज्जया वा भीत्या वा मोहाद्वा स्वयं वा सप्तमीकृत्तिकान्यतरवेधगन्धे तद्दिने जयन्ती नानुष्ठेया । परदिन एव ग्राह्येति निगमयति ।

तस्मात्सर्वप्रयत्नेन सप्तमीं कृत्तिका अपि ।
कल[illegible]णि त्यक्त्वा परतो व्रतमाचरेत् ॥

पूर्वेद्युर्दिवानिशं श्वो मुहूर्तमात्रं वा व्याप्ताष्टमी रोहिणी च शुद्धा । एतदलाभे विद्धां वह्नियुक्तां वा अष्टमीं विद्धां सप्तमीयुक्तां वा रोहिणीं च परित्यज्य रोहिण्या मृगेणवा युक्तां नवमीं दशमीं वा गृह्णीया-

दित्युक्तार्थं वैष्णवविषयत्वेन व्यवस्थापयति

'शुद्धाष्टमीं विना वापि शुद्धर्क्षस्याप्यभावतः ।
मृगेण च दशम्या च युक्ता ग्राह्या तु वैष्णवैः' ॥ इति ॥

सर्वप्रकारवेधो वैष्णवैस्त्याज्य इति तत्त्वस्थितिः ।

नन्वयं संहितोक्तः पक्ष इति चेत् किं तेन कृतो जयन्ती निर्णयः । स एव कथमिति चेत्

'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ' ॥

इति मनुस्मरणात् । तथापि पुराणोक्तः कथं ग्राह्य इति चेत् मैवम् - 'प्रत्यक्षानुमानाभ्यां स्मृतेश्च, स्मरन्ति च' इत्यादिसूत्रेषु स्मृतिप्रसंगे स्मृतित्वेन श्री विष्णुपुराणादिवचनोदाहरणात् 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वेदोपबृंहणत्वेनोक्तपुराणस्थाने

'दुर्बोधा वैदिकाश्शब्दाः प्रकीर्णत्वाच्च येऽखिलाः ।
तज्ज्ञैस्त एव शास्त्रार्थाः स्मृतितन्त्रे प्रतिष्ठिताः ॥'

इति स्मृतिशब्दप्रयोगाच्च पुराणस्य च स्मृतित्वावगमात्

'पुराणन्यायमीमांसा धर्मशास्त्रांगमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'

इति धर्मस्थानत्वस्मृतेश्च तदुक्तं प्रमाणम् । तर्हि तदुक्तार्थस्योदाहृत-वाराहादिपुराणवचनसिद्धत्वात् पञ्चरात्रस्य च वेदवद् धर्मशास्त्र-मूलत्वाच्च संहितोक्तं प्रमाणमिति तुल्यम् । तथा महाभारते -

'सात्वतं विधिमास्थाय गीतस्संकर्षणेन यः ।
इदं महोपनिषदं चतुर्वेदसमन्वितम् ॥

सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ।
नारायणमुखोद्गीतं नारदोऽश्रावयन्मुनीन् ॥

ब्रह्मणस्सदने तात यथादृष्टं यथा श्रुतम् ।
इदं श्रेय इदं ब्राह्ममिदं हितमनुत्तमम् ॥

ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ।
भविष्यति प्रमाणं वै एतदेवानुशासनम् ॥

एतद्धि सर्वशास्त्राणां शास्त्रमुत्तमसंज्ञितम् ।
पञ्चरात्रमिति ख्यातं नारायणमुखोद्गतम् ॥

तस्मात्प्रवक्ष्यते धर्मान् मनुस्स्वायंभुवः स्वयम् ॥
अन्येषां धर्मशास्त्राणामेतद्योनिर्भविष्यति ॥' इति ॥

किञ्च 'पत्युरसामञ्जस्यात्' इति सूत्रे पशुपतिमतं त्याज्यमिति प्रतिपाद्य 'विज्ञानादिभावे वा तदप्रतिषेधः' इति व्यासेन पञ्चरात्र प्रामाण्यसमर्थनाच्च तदुक्तमेव प्रबलम् । ततश्च तत्तत्संहितोक्तं तत्तद्देवस्थानेषु ग्राह्यम् । संहितासु वा धर्मशास्त्रे वा विषयानधिकृत्योक्तं तैरेव ग्राह्यम् । सामान्येनोक्तमविरुद्धं सर्वैर्ग्राह्यमिति निष्कर्षः । नन्वियं नित्या, काम्या वा । नाद्यः फलश्रवणात् । न द्वितीयः-प्रत्यवायस्मृतेः । मैवम् जन्माष्टमी जयन्ती चोभयं नित्यं काम्यं च । नित्यस्य काम्यत्वं विरुद्धमितिचेन्न संयोगपृथक्त्वन्यायेन ज्योतिष्टोमादिवदविरोधात् । नात्राधिकारश्रवणमिति चेन्न रात्रिसत्रन्यायेनाधिकारसिद्धेः ।

ये न कुर्वन्ति जानन्तः कृष्ण जन्माष्टमी व्रतम् ।
ते भवन्ति नराः प्राज्ञा व्याला व्याघ्राश्च कानने ॥

कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम ।
त्रैलोक्यसंभवं पापं तेन भुक्तं द्विजोतम ॥

इति स्मरणान्नित्यत्वम् ।

केवलेनोपवासेन तस्मिन्जन्मदिने मम ।
सप्तजन्म कृतात्पापान्मुच्यते नात्रसंशयः ॥

सप्त जन्मकृतं पापं राजन् यत्त्रिविधं नृणाम् ।
तत्क्षाळयति गोविन्द स्तिथौ तस्यां स्वभावतः ॥

इत्यादिवचनात्काम्यत्वं च । ततश्च "पापक्षयकामो जन्माष्टमीमुपवसेत् ' इति विधिप्रकारः ।

'जयन्ती वासरे प्राप्ते करोत्युदरपोषणम् ।
छिद्यते तिलशः कुक्षिर्यमदूतैस्सहस्रशः ॥

शूद्रान्नेन तु यत्पापं शवहस्तस्थ भोजनात् ।
तत्पापं लभते कुन्ति जयन्त्यां भोजने कृते ॥

क्रियाहीनस्य मूर्खस्य परान्नं भुञ्जतस्सदा ।
कृतघ्नस्य न लोकोऽस्ति जयन्ती विमुखस्य च ॥'

इत्यादिप्रमाणैश्च जयन्त्या नित्यत्वम् ।

पुत्रसन्तानमारोग्यं सौभाग्यमतुलं लभेत् ।
इह धर्मरतो भूत्वा मृतो वैकुण्ठमाप्नुयात् ॥

जयन्ती विष्णु संज्ञा सा सर्वसिद्धिप्रदा नृणाम् ।
नभःकृष्ण जयन्ती च परमा पापहारिणी ॥

इत्यादिस्मृतिभ्यश्च काम्यत्वमवगम्यते । 'सन्तानादिकामो जयन्तीमुपवसेत्' इति विध्यर्थक्रमः, अत्रफलं चाधिकम् । ननु जातेष्टौ पूतत्वादिवत् फलश्रवणमत्रार्थवाद इति चेन्न - संस्कार-कर्मत्वाभावात् । 'द्रव्य संस्कार कर्मसु परार्थत्वात्फल श्रुति-रर्थवादः स्या' दिति हि न्यायविदः। ब्राह्मणशेषत्वादर्थवादस्य स्वार्थे तात्पर्याभावे विधौ प्रवृत्त्युत्पादनरूपकिञ्चित्कारित्वा-भावेन तच्छेषत्वानुपपत्तेस्स्वार्थे तात्पर्यमस्तीति वेदान्तिनः ॥

किञ्चात्र पारणविषये किञ्चिदुच्यते । नन्वत्र दिवा रात्रौ वा पारणम् ।

तिथ्यन्ते वाथ भान्ते वा ह्युत्सवान्ते च पारणम् ।
कुर्यात्कृष्णार्चनान्ते वा न कुर्या न्निशिपारणम् ॥

इति जयोत्तरसंहितायां चतुर्धा पारणावसरमुक्त्वा रात्रिपारणं निषिद्ध मितिचेन्न तिथिऋक्षान्यतरानवगमविषयत्वात्तस्य ।

सांयोगिकोपवासे तु यत्रैकोपि वियुज्यते ।
तत्रैव पारणं कुर्या दिति वेदविदो विदुः ॥

इति नारदस्मृतेः । ननु

तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा।
अर्धरात्रेऽथवा कुर्यात्पारणं तत्परेऽहनि ॥

इति परदिन एव पारणविधानान्न रात्रौ पारणमिति चेन्मैवम्।

सर्वेष्वेवोपवासेषु दिवापारण मिष्यते।
अन्यथा तत्फलस्यार्धं धर्ममेवोपसर्पति ॥

'धर्म:' - यम:।

अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं निशि।
हन्यात्पुराकृतं धर्ममुपवासार्जितं फलम् ॥

इत्यादिरात्रिपारण निषेधपरवचनानां फलहानिश्रवणेन काम्योपवास विषयत्वावगते:। अत: फलाभिसन्धिविरहे रात्रावपि पारणमविरुद्धमेव तथानन्ताख्यसंहितायाम्

'भक्तानां वैष्णवानां च शुद्धानां नियतात्मनाम्।
विहिता सात्त्वताभिज्ञै: रात्रावेव तु पारणा ॥'

'शुद्धानां' - प्रयोजनान्तरगन्धरहितानाम् वैष्णवानाम्।

'अधृत्वा विधिना चक्रं ब्राह्मण: प्राकृतो भवेत्।
विष्णुरेव हि येषां वै देवता वैष्णवास्तु ते ॥

अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः ।।

इति पाद्माश्वमेधिकाद्युक्तलक्षणानाम् ।

उत्सवान्तेऽथ तिथ्यन्ते व्रती कुर्यात्तु पारणम् ।
फलाभिसन्धिरहितो रात्रावेव तु पारणम् ।।

'व्रती' - कामी, अपरेद्युरुत्सवान्ते पारणं कुर्यात् । निष्कामस्तु रात्रावेव निवेदितं भुञ्जीतेत्यर्थः ।

पञ्चकालरतानां च दीक्षितैकान्तिनामपि ।
भक्तैर्भागवतैस्सार्धं रात्रावेव तु पारणम् ।। इति ।।

एवंविधनिषेधग्रहणपरोभयवचनानां वचनैरेव कृतां व्यवस्था-मास्थाय स्थिरप्रज्ञास्सुस्थास्स्थास्यथेति सर्वमनवद्यम् ।

पाण्डित्यविख्यापनतत्पराणां ग्रन्थैर्विरुद्धैरलमव्यवस्थैः ।
निर्मत्सराः पश्यत तं प्रबन्धं ब्रवीति यं वैदिकसार्वभौमः ।।

इति जयन्ती निर्णयः समाप्तः ।

# कृत्तिकादीपोत्सवनिर्णयः

अधुना कृत्तिकादीपोत्सवो निर्णीयते। अत्र भरद्वाजः -

मास्यूर्जे कृत्तिकाधिष्ण्ये सायंकाले प्ररोपयेत्।
दीपांश्चैव महादीपाननेकान्सर्वतो गृहे॥
देवालये नृपगृहे सभायां पुण्यभूमिषु।

सिद्धान्ते च -

वृश्चिकस्थे दिवानाथे वृषभस्थे निशाकरे।
वृषभस्योदये कुर्याद्दीपारोपमहोत्सवम्॥

वृश्चिकेऽर्के वृषे चन्द्रे पूर्णायामग्निभे शुभे।
दीपं दद्याद् वृषस्यांशे धनधान्यादि वर्धते॥

जयोत्तरसंहितायां च -

कृत्तिकादीपविधिना समाराधनमुत्तमम्।
स्थानस्य राजराष्ट्रस्य संपत्करमनुत्तमम्॥

विपत्प्रशमनं ब्रह्मन् प्रीणनं जातवेदसः ।
एवमेव विधानेन कृत्तिकोत्सवमाचरेत् ॥

मासादौ मासान्ते च कृत्तिकासंभवे परत्रैव दीपोत्सवं कुर्यात् । पूर्वत्र वा परत्र वा संक्रमरहिते कुर्यात् । उभयत्र संक्रमे संपूर्णपर्वयुक्ते कुर्यात् । तथा भरद्वाजः -

कृत्तिकाद्वयसंयुक्ते मासि तस्मिन्कथं भवेत् ।
तन्मासान्तगतास्वेव तासु दीपान्प्ररोपयेत् ॥

कृत्तिका संक्रमे युक्ता यदि दीपप्ररोपणम् ।
न तासु कारयेदादौ कृत्तिकास्वेव कारयेत् ॥
मासादौ कृत्तिकास्वेव संक्रान्तिस्तासु वर्जयेत् ॥

संक्रमद्वयसंयुक्तं कृत्तिकाद्वयमेव चेत् ।
द्वयोरपि च नक्षत्रे पूर्णबिम्बेन्दुसंयुते ॥
आग्नेयं कारयेद्धीमान् राजराष्ट्रविवृद्धये ॥

दत्तात्रेयश्च -

एकस्मिन्नपरे घस्रे यदि संक्रमणं न च ।

अपौर्णमासं पूर्वर्क्षं संक्रान्तिश्च दिनेऽपि वा ।
परस्मिन्कारयेद्धीमान् महादीपप्ररोपणम् ॥

एतद्यो विधिवत्कुर्यान्महादीपप्ररोपणम् ।
राजराष्ट्रविवृद्ध्यै च लक्ष्मीलाभाय कल्पते ॥
सद्यो वर्षति पर्जन्य श्चोरा नश्यन्त्यसंशयम् ।

यदा कृत्तिकाद्वयं संक्रान्तिदुष्टमपर्वकं वा तत्र पर्वयुक्तरोहिण्येव ग्राह्या । तथा भरद्वाजः -

द्वयोरन्यतरत्पौर्णमास्या न च युतं कथम् ।
तदानीं रोहिणीयुक्ता पौर्णमासी यदि द्विज ॥
तस्यां वै ज्वालयेद्दीपानिति शास्त्रस्य निश्चयः ।

एतत्पर्व रोहिणीयुक्तं मध्यममित्युक्तं ज्योतिषार्णवे -

कृत्तिकापर्वसंयुक्तमुत्तमं दीपमाचरेत् ।
तत्पार्श्वे पर्वसंयुक्तं मध्यमं दीपमाचरेत् ॥

एवं रोहिणीयोगाभावे संक्रान्तियुक्तापि परा कृत्तिका ग्राह्या । तथा दत्तात्रेयः -

पौर्णमास्या न च युता रोहिणी कथमत्र वै ।
एवं चेत्परसंक्रान्तौ कृत्तिकास्वेव कारयेत् ॥

ग्रहणे नियमो ज्योतिश्शास्त्रे दर्शितः -

अधिमासप्रभेदेन पर्वद्वयमथो भवेत् ।
उत्तरत्र शुभं शस्तं दीपोत्सवमथाचरेत् ॥

संवत्सरे तु सोमस्य ग्रहणं यद्दिने भवेत् ।
तद्दिनं वर्जयेदेव तद्वत्सूर्यग्रहं त्यजेत् ॥

सोमग्रहो यदि भवेत् तां निशां वर्जयेच्छुभे ।
सूर्यस्य ग्रहणं चेत्तु अहोरात्रं शुभे त्यजेत् ॥

कार्तिके मासि नक्षत्रे कृत्तिकाख्ये विधो ग्रहे ।
तन्मासं वर्जयन्त्येके तद्दिनं वा परित्यजेत् ॥

ग्रहणे दीपोत्सवे निषिद्धे कर्तव्यमुक्तं ज्योतिश्शास्त्रे -

पर्व ग्रहणयुक्तं चेन्नात्र दीपोत्सवो मतः ।
कुर्यात्परेह्नि कलयाप्यग्निभं पर्व वा यदि ॥

दिनद्वये कृत्तिकाधिक्यं यत्र तत्र कुर्यात्समे परत्रैव । तथाऽऽत्रेये -

द्विवारगतमाग्नेयं नक्षत्रं चेत्कथं भवेत् ।
अहोरात्रेऽधिकं यस्मिन्नक्षत्रं कृत्तिकाद्वये ॥

तस्मिन्प्ररोहयेद्दीपानहोरात्रद्वये समे ।
अपरे दिवसे कार्यं महादीपप्ररोपणम् ॥

एवमभिप्रेत्य ज्योतिश्शास्त्रे -

द्वयो रहोस्संगतिस्स्यात्कला वाप्यन्तिमे दिने ।
पूर्वं हित्वा परत्रैव दिवसे दीपमंगलम् ॥

अपरे दैविकं कुर्याद्दीपोत्सवविधिं द्विज ।
सा तिथिस्सकला ज्ञेया संग्राह्येत्यवदद्गुरुः ॥

अन्यत्र च -

द्वयोर्दिवसयोः.पर्व यदि स्या दादिमं दिनम् ।
हित्वा परत्र दिवसे कुर्याद्दीपोत्सवं बुधः ॥

कृत्तिकाभिरयोगे वा केवलायां तिथौ भवेत् ।
अपर्वणि कृते दीपे राजराष्ट्रं विनश्यति ॥
तस्मात्सर्वप्रयत्नेन पर्वयुक्तं समाचरेत् ॥ इति ॥

ज्योतिषार्णवोक्तमपि भौमवारयुक्तं पर्व त्याज्यमेव। तथा सुप्रदीपे-

पर्वयुक्तेऽपिवर्ज्यं स्याद्भौममन्त्यदिने यदि ।
अपरे दिवसे कुर्यात्कृत्तिकाया महोत्सवम् ॥

एवं चतुर्दशीयुक्तं भरणीयुक्तं वा दिनं त्याज्यमित्युक्तं जयोत्तर-संहितायां -

कृत्तिका भरणीमिश्रं तद्दिनं सचतुर्दशि।
अल्पवृष्टिश्च रोगश्च राष्ट्रक्षोभो न संशयः ॥

विष्णुरहस्ये च -

कृत्तिका भरणीयुक्ता तद्दिने पूर्णिमा यदि।
तदन्यवासरे त्वेव कृत्तिकोत्सवमाचरेत् ॥

भरणीकलया युक्ता कृत्तिका पूर्णिमा यदि।
सा तिथिर्निष्फला त्याज्या दीपदानं निषिध्यते ॥

भरणी कृत्तिकायुक्ता युक्तपर्वचतुर्दशी।
त्याज्यावेतौ सदा ब्रह्मन् उत्सवं नैव कारयेत् ॥

परदिने कलामात्रयोगेऽपि तत्रैव कुर्यात्। तथा विष्णुरहस्ये -

रोहिणी कृत्तिकायुक्ता पूर्णिमा कलया युता।
निश्यादौ दीप आरोप्यस्सर्वसंपत्सुखावहः ॥

कृत्तिकारोहिणीमिश्रे तद्दिने पूर्णिमा यदि।
राजराष्ट्रविवृद्धिःस्यात्तत्काले दीप उत्तमः ॥

उभयो रोहिणीयुक्ता कृत्तिकाभिर्विना भवेत् ।
केवलं पौर्णमास्येव कृत्तिकोत्सवमाचरेत् ॥

दिवसे कलया वापि पूर्णिमा संभवेद्यदि ।
दिवारात्र्यन्तरे ब्रह्मन् दीपोत्सवमथाचरेत् ॥

कृत्तिकारोहिणीमिश्रं तद्दिनं पौर्णमास्यपि ।
महावृष्टिश्च सस्यं च राजराष्ट्रं च वर्धते ॥

यत्तु-

ऊर्जे मासि चतुर्दश्या संयुते वाग्निदैवते ।
नक्षत्रेऽस्य प्रदोषे तु कृत्तिकोत्सवमाचरेत् ॥ इति,

तत्परदिने कृत्तिकापर्वान्यतर कलामात्राभावे वा दुष्टे वा पूर्वदिन-ग्राह्यतापरम् । मासान्ते शुद्धपर्वाग्निनक्षत्रसंभवेत्तत्रैव कुर्यान्न चतुर्दशीयुक्ते । पूर्वत्र तत्त्यागपरानेकवचनविरोधात् । तत्सर्वं प्रदोषवेधपरमिति चेन्न -

'पूर्णिमा कलया युक्ता उदये रोहिणीयुता । दिवसे कलया वापि' इत्यादि वचन विरोधात् । प्रत्युत प्रत्यवायो ज्योतिश्शास्त्रे प्रदर्शितः -

दीपश्चैवापभरणे सर्वं संहरति क्षणात् ।
कृत्तिकाभरणीयुक्तं तद्दिनं सचतुर्दशि ॥
अल्पवृष्टिश्च रोगश्च राष्ट्रक्षोभो न संशय: ॥

अत: कलामात्रयोगेऽपि परदिनमेव ग्राह्यम् । तच्च तत्रैवोक्तम् -

कृत्तिका रोहिणीमिश्रा कला वा पौर्णमास्यपि ।
राजराष्ट्रं सुभिक्षं स्यात् तत्काले दीपमाचरेत् ॥

भगवच्छास्त्रे च -

दिवसे तु कलामात्रा पूर्णिमा रोहिणीयुता ।
दिवारात्र्यन्तरे राष्ट्ररक्षार्थं दीपमाचरेत् ॥

ननु पर्व दीपारोपणकाले नास्तीति चेन्न - उदयकालीनस्य तस्य नक्षत्रस्य वा 'जले तैलबिन्दुव'दासायं व्याप्तत्वेन 'अपर्वणि कृतोदीप:' इत्यस्यानवकाशात् । तथा भृगु: -

सा तिथिस्सकला ज्ञेया यस्यामभ्युदितो रवि: ।
तन्नक्षत्रमहोरात्रं यस्मिन्नस्तमितो रवि: ॥

देवलश्च -

यां तिथिं समनुप्राप्य उदयं याति भास्कर: ।
सा तिथिस्सकला ज्ञेया दानाध्ययनकर्मसु ॥

भविष्यत्पुराणे च -

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ।।

अत्रापि दीपोत्सवप्रकरणे ज्योतिश्शास्त्रे -

द्वयोरह्नोस्संगतिस्स्यात् कला वाप्यन्तिमे दिने ।
सा तिथिस्सकला ज्ञेया सा ग्राह्येत्यवदद् गुरुः ।।

एवमभिप्रेत्य हि सूर्योदयकाले चतुर्दशीभरण्योः कलामात्र-सद्भावेऽपि तस्य सायंकालव्याप्तत्वेन तद्दिनवर्ज्यत्वं स्मृतिषूद्घुष्यते । इदं वैष्णवविषयमिति चेन्न - जयन्त्येकादश्यादिवद्विद्धा त्यागस्यात्रविषयभेदाप्रतीतेरनुक्तेश्च । अतश्चतुर्दशीभरणीकला-युक्तदिवसवर्जनं सर्वविषयमिति सिद्धम् । ज्योतिश्शास्त्रे पूर्वदिनस्य चतुर्दशीभरणीदुष्टत्वे प्रतिपदेवग्राह्येत्युक्तम् । 'पूर्णिमा प्रतिपत्सन्धौ चन्द्रस्संपूर्यते यतः । प्रथमा पूर्णिमा ज्ञेया तत्र दीपः श्रियावहः' ।। इति । अत्र कामिके दीपारोपण कालनियम उक्तः-

रवेरस्तमयात्पूर्वं यामपादावसानिकः ।

ज्योतिषार्णवे च -

रवेरस्तमयात्पूर्वं यामपादप्रभृत्यपि ।
भोगी दीपोत्सवं कुर्याद्राजराष्ट्रप्रवृद्धये ॥

मासादिदिनेष्वस्तमयादूर्ध्वं दीपारोपणकालः । तत्रैव वृषभलग्न-सद्भावात् । मासमध्यमासान्तदिनेष्वस्तमयादर्वाक्कालः अस्तमयात्प्रागेव वृषभलग्न प्रवृत्तेः - अतो वृषभादौ त्याज्यांशं विहाय प्रदोषे कृत्तिकादीपारोपः कार्य इति निरवद्यम् । अत्र षड्धर्मसंग्रहश्लोकः -

अर्के वृश्चिकगे तदस्तसमये दीपोत्सवः पर्वणि
स्यादाद्यं दिनयोस्त्यजेह्निनमथो पर्वान्तकालात्परम् ।
यामार्धं तदधस्तदर्धमवधिस्स्यात्पर्वयुक्ते विधि-
द्व्यर्ह्ने भौमदिनं त्यजेद्ग्रहणवत्पर्वास्ति चेदग्निभे ॥

इति कृत्तिकादीपोत्सवनिर्णयस्समाप्तः ॥

# उपाकर्मनिर्णयः

साम्प्रतमुपाकर्म निर्णीयते। उपाकर्म-उपक्रमः। वेदाध्ययनारंभ-इत्यर्थः। तथा याज्ञवल्क्यः - 'अध्यायानामुपाकर्म श्रावण्याम्' इति। अध्यायाः - वेदाः। इदं चोपाकर्म स्वस्वगृह्योक्तकाल एव कुर्यात्। तथाऽऽत्रेये 'उपाकर्म स्वगृह्योक्तकालेन स्वर्कविष्णुभे।' इति। कार्ष्णाजनिश्च -

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च।
ऋषीन्दर्भमयान्कृत्वा तर्पयेदर्चयेद् बुधः॥

दर्भैर्ऋषिकल्पनं छन्दोगविषयम्। पद्धतौ च - 'श्रावण्यां प्रौष्ठपद्यां वा स्वगृह्योक्तकाले पञ्चमीपञ्चदश्योः' इति। अतः स्वस्वधर्म-गृह्योक्तकाल एवोपाकर्म कार्यम्। न गृह्यान्तरविहितकाले। अन्यथा 'स्वधर्मे विद्यमानेऽपि परधर्मेण वर्तते। अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति' इति स्मरणात्प्रत्यवायः स्यात्। स्वस्वगृह्यानुक्तौ ज्योतिश्शास्त्रादिविहितं कालान्तरं ग्राह्यम्।

तथा बोधायनः-

यस्मिन्काले विरोधोऽस्ति ज्योतिषागमयो र्द्वयोः ।
ज्योतिषोक्तविधानेन श्रुतिचोदितमारभेत् ॥

प्रयोगशास्त्रविहितः कालो यस्य न कस्यचित् ।
विधत्ते ज्योतिषं तत्र विहिते त्वविरोधि तत् ॥

प्रयोगशास्त्रम् - कल्पसूत्रगृह्यादि । अत्राश्वलायनः -'श्रवणे श्रावणस्य पञ्चम्यां हस्ते वा' इति । आपस्तंबः - 'श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य ' इति । द्राह्यायणश्च - 'प्रौष्ठपद्यां हस्तं गृहीत्वा' इति । 'प्रौष्ठपदीं हस्तेनाध्यायानामुपाकुर्युः श्रावणी'मित्येके । वैखानसश्च - 'श्रावण्यां पौर्णमास्यां शिष्यं वापयित्वा स्नातम् ' इत्यादि । याज्ञवल्क्यश्च-

अध्यायानामुपाकर्म श्रावण्यां श्रवणेऽपि वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रवणस्य तु ॥

श्रावण्यां तैत्तिरीयकाः कुर्युः । बह्वृचाः श्रावणे श्रवणनक्षत्रे कुर्युः । हस्तनक्षत्रयुक्तायां पञ्चम्याममावास्यायां वा प्रौष्ठपद्यां

बह्वृचां श्रावणे मासि श्रोणा शस्तमुपाकृतौ ।
पूर्णा विष्णौ वसौ विश्वे यजुषां स्यादुपाकृतिः ॥

पूर्णा विष्णौ प्रौष्ठपद्यां साम्नां दर्शेऽथ हस्तभे ।
ऋक्सामोपाकृति र्हस्ते पञ्चम्यां श्रवणे शुभम् ॥ इति ।

बह्वृचामिति च्छान्दसः प्रयोगः । श्रीधरीये -

श्रावण्यां पौर्णमास्यां स्याद्वेदोपाकरणक्रिया ।
पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ॥
बह्वृचाः श्रवणे कुर्युः सङ्क्रान्ति ग्रहणं विना ।

गोभिलोऽपि -

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामगायिनः ॥

गार्ग्यश्च -

पर्वण्यौदयिके कुर्युः श्रावणं तै[redacted]ाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते ॥

'ग्रहः' - ग्रहणम् । अत्र ग्रहण संक्रमणवर्जनस्मरणं प्रथमोपाकृति-
विषयम् । तथा वक्ष्यते । अत्र व्यवस्थोक्ता ज्योतिश्शास्त्रे -

अर्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तु वा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ।।

औदयिक शब्दार्थः स्मृत्यन्तरे निरुक्तः-

श्रावणी पौर्णमासी तु संगवस्पृग्यदाभवेत् ।
तदेवौदयिकं ज्ञेयं नान्यदौदयिकं विदुः ।।

औदयिकं संगवव्याप्तमित्यर्थः । अन्यच्च -

श्रावणी पौर्णमासी तु संगवात्परतो यदि ।
तदा त्वौदयिकं ज्ञेयं नान्य दौदयिकं विदुः ।। इति ।

निगमे च -

श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्तकैः ।
विद्धा स्याच्छन्दसां कुर्यात्तत्रोपाकर्मसंज्ञकम् ।।

दिनद्वयं समाश्रित्य पौर्णमासी यदि स्थिता ।
परेद्युस्संगवं प्राप्य स्थिता सा कर्मणोऽर्हति ।।

विधाने च -

संधिस्संगवतः पश्चादर्वाङ्मध्यंदिनाद्यदि ।
तस्मिन्नुपाकृतिं कुर्य[illegible]ध आहुतिः।।

समिदाधानमित्यर्थः।

> सन्धिस्संगवतः प्राक्स्यात् पूर्वस्मिन्पर्वणि क्रिया।
> श्वोभूते समिदाधानमेष श्रावणिको विधिः ॥

अत्र संगवावर्तनान्तराळे पर्वप्रतिपत्सन्धौ तत्रोपाकर्मकरणे 'श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य वा श्वोभूते माहानदमुदकमुपस्पृश्य सावित्र्या समित्सहस्रमादघ्याज्जपेद्वा' इत्यापस्तंबेन रात्रिव्याप्तां पौर्णमासीमुपोष्य परदिने प्रातर्गायत्रीजपविधानात् 'उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव हि' इति स्मृतेश्च प्रातःकाले गायत्रीजपं कृत्वा अपराह्णे उपाकर्म कार्यमिति सिद्धम्। एवं बहुस्मृतिषु श्रावणीविधानाद्विशेषतस्स्वस्वगृह्ये विधानाच्च श्रावण्येव ग्राह्या। श्रावणी नाम श्रवणादिनक्षत्रयुक्ता पौर्णमासी। सा कदाचित्कर्कटके दर्शानन्तरं भवति। कदाचित्सिंहे दर्शात्प्राग्भवति। श्रीधरीये - 'श्रावणी कर्कटकस्थे सवितर्यमावास्यानन्तरं प्राप्ता पौर्णमासी भवति' इति। उज्ज्वलायां च - 'सिंहस्थे सवितरि दर्शात्पूर्वा या पौर्णमासी सा श्रावणी' इति। स्मृतिश्च -

> सिंहदर्शात्तु या पूर्वा पूर्णा सा श्रावणी भवेत्।
> तत्रैवोपाकृतिं कुर्यात् सिंहस्थोर्को भवेन्न वा ॥

ननु -

वेदोपाकरणे प्राप्ते कुळीरस्थे दिवाकरे ।
उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके ।।

इति स्मरणात्कथं कर्कटके तदिति चेन्न-

नर्मदोत्तरतीरे तु कर्तव्यं सिंहयुक्तके ।
कुळीरेऽपि च कर्तव्यं नर्मदायास्तु दक्षिणे ।। इति स्मृतेः ।

अतस्सिंहेऽर्के इति विशेषणं नर्मदोत्तरतीरविषयमेवेति व्यवस्थापनीयम् । अस्मिन्नेव विषये कालप्रकाशिकाकारः -

कुळीरे रविसंयुक्ते उपाकुर्यात्तु दक्षिणे ।
नर्मदोत्तरतीरे तु कर्तव्यं सिंहगे रवौ ।।

श्रवणे श्रावणे मासि पौर्णमासी यदा भवेत् ।
उपाकर्म तदा कुर्याद् ब्रह्मतेजोऽभिवृद्धये ।।

पौर्णमास्यास्तु नित्यत्वादापस्तंबस्य शासनात् ।
मुक्त्वा भाद्रपदाषाढौ श्रावण्यामेव कारयेत् ।।

असिंहेऽर्के प्रौष्ठपद्यां श्रावण्ये च व्यवस्थया ।
उपाकर्म तु कुर्वीत ग्रहणे चन्द्रसूर्ययोः ।।

प्राधान्येन विधानाच्च मनुनाध्यायकर्मणः ।
प्रथमोपाकृतिश्चैव कर्तव्येत्याह गौतमः ॥

यत्तु मनूक्तं -

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥ इति -

तत् श्रावण्या दुष्टत्वे प्रौष्ठपद्यां प्रथमोपाकृतिविधिपरं कथंचित् श्रावण्यामसंभवे सर्वेषां प्रौष्ठपदी ग्रहण विधिपरं वा। एवमभिप्रेत्य ज्योतिश्शास्त्रे च -

'सौरचान्द्रनभसोस्तु पूर्णिमा विश्वविष्णुवसुभेषु संगता ।
शस्यते यजुरुपाकृतौ न चेद्वारुणी त्रिकयुता नभस्ययोः'॥

अयमर्थः -

रवेः राश्यन्तरसंक्रमो मेषादिस्सौरः । मेषादिषु दर्शान्तश्चैत्रादिश्चान्द्रः । एतदुभयनिबन्धनो मधुमाधवादिः । अतो नभः शब्दः कर्कटक सिंह श्रावणपरः । सिंहकन्याभाद्रपदपरो नभस्यशब्दः । अतः कर्कटके सिंहे वा श्रावण्यामेवोपाकर्म कार्यम् । तत्रासंभवे प्रौष्ठपद्यामिति । श्रावणी च श्रवणश्रविष्ठानक्षत्रयोरन्यतरेण युक्ता ।

तथा ज्योतिश्शास्त्रे -

चित्रादि तारकाद्वन्द्वैः पौर्णमासीसमन्वितैः ।
मासाश्चैत्रादयो ज्ञेयास्त्रिभिषष्ठान्त सप्तमाः ।।

एतत्प्रौष्ठपदीग्रहणं श्रावण्यामोषधिप्रादुर्भावाभावविषयमिति केचिद्व्याचक्षते -तच्चिन्त्यम् । तदभावेऽप्युपाकर्मणो नित्यत्वेन सन्ध्यावन्दनवदवश्यं कर्तव्यत्वात् । सिंहे सवितृस्थित्यभाव-विषयमित्यन्ये - तदप्यसत् । देशान्तरविषयत्वात् सिंहार्कोपा-कर्मणः । अतः श्रावण्यामेव ऋग्यजुरुपाकर्म कर्तव्यमिति निश्चीयते । यत्तु स्मृत्यन्तरवचनम् -

आषाढे श्रावणे वापि प्रौष्ठपद्यामथापि वा ।
यत्र [redacted]तिम् ।।
कालत्रयेऽपि दोषश्चेच्छ्रावण्यामेव कारयेत् । इति ,

तदिदं स्वगृह्यानुक्तकालविषयम् अर्धरात्रादधः संक्रमग्रहणयुक्त पर्व विषयं वा मौढ्यादि दोषे प्रथमोपाकृतिविषयं वा समर्थनीयम् । द्वितीयाद्युपाकृतौ दोषाभावेन श्रावण्यामेव कर्तव्यत्वात् । तथाऽऽत्रेये -

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेपि वा ।
तथाधिमास सं[redacted] त्रिषु ।।

प्रथमोपाकृतिर्न स्यात्कुर्याद्यदि विनश्यति ।
चण्डांशोर्मण्डलं प्राप्तौ यदा शुक्रबृहस्पती ।।

श्रावणस्य तु नित्यत्वात्कर्तव्यं नित्यकर्मवत् ।

अतः प्रथमेतरोपाकरणे न दोषगन्धः । तथा स्मृत्यन्तरवचनानि -

'यज्ञोपवीतं कर्तव्यं श्रावणे गुरुशुक्रयोः ।
बाल्ये मौढ्येऽपि वार्धक्ये कर्तव्यं नित्यकर्मवत् ।।

श्रावणी पूर्णिमा यत्र ग्रहसंक्रान्तिदूषिता ।
स्वाध्यायस्य प्रधानत्वान्नित्यत्वाच्छ्रावणस्य च ।।

अञ्जसा श्रावणं विप्रैः कर्तव्यं नित्यकर्मवत् ।
ग्रहसंक्रमयोः शूलं श्रावणस्य न विद्यते ।।

पौर्णमास्यास्तु नित्यत्वादापस्तंबस्य शासनात् ।
अञ्जसा श्रावणं विप्रैः कर्तव्यं नित्यकर्मवत् ।।'

'श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य' इत्यापस्तंबेन श्रावण्यामेवोपाकर्मविधानात्कालान्तरपु[illegible]श्च विधिप्राबल्यात् तिथिप्राबल्यान्नित्यत्वाच्च श्रावण्यामेव कर्तव्यं नान्यत्रेत्यर्थः ।

स्मृतिचन्द्रिकायां च -

उपाकर्मणि चोत्सर्गे प्रेतकार्ये तथाब्दिके ।
जातके नामकरणे सीमन्ते पुंसि कर्मणि ॥

बाल्ये वा वार्धके वापि मौढ्ये वा गुरुशुक्रयोः ।
संसर्पादिषु चैतान्हि दोषानपि न पश्यति ॥

संसर्पांहस्पती मासावधिमासादयस्तथा ।
शुक्रे वास्तंगते जीवे बाल्ये वा वार्धकेऽपि वा ॥
न दोषाय भवेत्कर्म कर्तव्यं विधिचोदितम् ।

प्रसंगादिदं निरूप्यते भृगोः प्राग्बाल्यं त्र्यहम् । पश्चाद्बाल्यं दशाहम् । प्राग्वृद्धत्वं पक्षः । पश्चाद्वृद्धत्वं पञ्चाहम् । गुरोर्बाल्यं वार्धक्यं च पक्ष इति संग्रहः । अत्र भृगुः -

पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम् ।
पक्षं वृद्धस्तु पूर्वस्यां पञ्चाहं पश्चिमे सितः ॥

विधिरत्ने च -

दिनत्रयं तु बालोऽयं पूर्वस्यामुदितो भृगुः ।
तस्याः पश्चास्तवेलायां पक्षं वृद्धस्तथा गुरुः ॥

आत्रेये च -

पक्षं वृद्धो भृगुः प्राच्यां त्र्यहं बाल्यं तु जीववत् ।
प्रत्यग्दशाहं बाल्यं स्याद्वार्धं पञ्चदिनं तयोः ॥

रत्नमालायां च -

प्रागुद्गतः शिशुरहस्त्रितयं सितस्स्यात्
पश्चाद्दशाहमथ पञ्चदिनानि वृद्धः।
प्राच्यां तु पक्षममरेन्द्र गुरुस्तु पक्षं
प्राच्येव वा दिशि वदन्ति वसिष्ठमुख्याः ॥

दामोदरीये -

'प्राग्बाल्यं दिवसत्रयं दशदिनं पश्चात्सितो वृद्धतां, पक्षे वासर-पञ्चके च लभते पक्षं गुरुस्सर्वदा' इति ।

श्रीधरीये च -

प्रत्यगभ्युदितः शुक्रो दशाहं बालभावगः ।
अस्यां वृद्धस्तु पञ्चाहं गुरुश्चैवं प्रचोदितः ॥

इत्यादिज्योतिश्शास्त्रवचनेषु लघुकालस्मरणमापद्विषयम् । तथा वृद्धमिहिरः -

'बहवो दर्शिताः काला ये बाल्ये वार्धकेऽपि वा ।
ग्राह्यास्तत्राधिकाश्शेषा देशभेदादुदाहृताः ॥'

अतस्संकट एव लघुकालो ग्राह्यः। देशभेदो विन्ध्यादिः। तत्रैव -

प्राक्पश्चादुदितः शुक्रःपञ्चसप्तदिनं शिशुः।
विपरीतं तयोरस्ते वृद्धस्तद्वद् गुरोरपि ॥ इति।

वृहस्पतिवचनोक्तकालग्रहणं व्यवस्थितमित्यर्थः । तथा वृद्धगार्ग्यः -

शुक्रो गुरुः प्राक्च पराक्च बालो विन्ध्ये तथावन्तिषु सप्तरात्रम्।
वंगेषु हूणेषु च सप्तपञ्च शेषेषु देशेषु दिनत्रयं स्यात् ॥

इति बृहस्पतिवचनव्यवस्थापकं गार्ग्यवचनं तेन प्रायेण नाज्ञायि, अन्यथा भृगुविधिरत्नात्रेयरत्नमालाश्रीधरीयदामोदरीयाणि वचनानि दत्तजलाञ्जलीनि स्युः । अतो देशभेदेन आपदा वा लघुकालपरवचननिचयो व्यपस्थापनीयो विद्वद्भिः । ग्रन्थान्तरे भृगोः प्राग्बाल्यं पञ्चाहमितिवचनं न साधीयः । संवादवचनाभावात् । बृहस्पतिवचनस्य वंगहूणादिदेशविषयत्वात् । भृगोः प्राक्त्र्यहबाल्यस्य भृग्वाद्यनेकवचनसिद्धत्वाच्च तत्त्र्यहमेवेति सिद्धम्। एवं ज्योतिश्शास्त्रवचनैरेव भृगोः प्रागस्तमये पक्षवृद्धत्वनिश्चयात् पश्चादस्तमये दशाहवृद्धत्वप्रतिपादनादुभयत्र गुरोः पक्षवृद्धत्वबालत्वनिर्धारणाच्चायमेवार्थो ग्राह्य इति शास्त्रीयः

पन्था इत्यलमलम् । प्रकृतमनुसरामः । अत्राधिमासविषये कालनिर्णये -

उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यान्मलमासे विसर्जयेत् ॥

हारीतः -

उपाकर्म तथोत्सर्गः काम्यमुत्सवमष्टकाः ।
मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् ॥

दोषापवादसंग्रहे च -

एको मूढो भवेदन्यस्स्वोच्चमित्रांशगो यदि ।
अन्यस्यास्तमये काले कुर्याच्छ्रावणमञ्जसा ॥
प्रथमोपाकृतिं चापि कुर्यादेवाविचारयन् ।

आत्रेये च -
कुर्या द्वान्यस्य संदर्शे चौळं मोञ्जीं विना शुभम् । इति ।

अत्रायं विवेकः -

ऋग्यजुस्सामाथर्वेशा जीवशुक्रकुजेन्दुजाः ।
शाखाधीशे शक्ति युक्ते तच्छाखाऽध्ययनं शुभम् ॥

इत्यात्रेये दर्शनात् शुक्रे शक्तियुक्ते गुरुमौढयेऽपि यजुरुपाकर्म

कर्तव्यम् । एवं शुक्रमौढ्येऽपि गुरौ शक्तियुक्ते ऋग्वेदोपाकर्म कार्यम् । एवमन्यतरमौढ्येऽपि भौमे शक्तियुक्ते सामोपाकर्म करणीयम् । 'शाखाधीशे शक्तियुक्ते' इति हेतूक्तेः । अतो मौढ्यादि दोषेषूपाकर्मवर्जनस्मरणं स्वशाखाधीशस्य शक्त्यभाव विषयम् । श्रीधरीये-

अनुप्तबीजे नृपतौ विनष्टे सूते मृतौ राष्ट्रसमाकुले च ।
उत्सर्जनोपाकरणं न कुर्याद् ग्रस्तेन्दुसूर्ये गुरुणास्तयाने ।।

अनुप्तबीज इति-ओषधिप्रादुर्भावस्तुतिः । स च संभवाभिप्रायः । आशौचं सर्वविषयम् इतरत्प्रथमोपाकर्मविषयम् । अत्रोपा-कर्मण्यवश्यं ब्रह्मचारिभिर्वपनं कार्यम् । 'श्रावण्यां पौर्णमास्यां शिष्यं वापयित्वा' इति कात्यायनस्मृतेः । श्रीधरीये च - 'दीक्षा-कालेऽभिषेके व्रतनियमविधौ' इति । स्मृत्यन्तरे च -

'क्षुरकर्म न कर्तव्यं चौलात्परमृतुत्रयम् ।
तथोपनयनादूर्ध्वमुपाकर्म विना क्वचित् ।।

कर्मांगत्वात्तस्य तस्मिन्नेव दिने क्षौरं कार्यं, न पूर्वेद्युः । चतुर्दश्या दुष्टत्वात्पौर्णमास्यां विहितत्वात् शिष्टाचाराच्च तस्मिन्नेव दिने व्रतिना क्षौरं कार्यम् । नात्र वारादि चिन्त्यम् । तथा ज्योतिश्शास्त्रे-

तार वार तिथिजा गुणाऽगुणा नात्र सूत्रविधिवैभवादतः ।

वसिष्ठश्च -

वैधे कर्मणि तु प्राप्ते कालदोषं न चिन्तयेत् ।
सद्यः क्षौरं प्रकुर्वीत मातापित्रोर्मृतौ तथा ॥

अतोऽस्यापि वैधत्वादुपाकर्मक्षौरे जन्मनक्षत्र कुजवारादि न चिन्त्यम् । किमिदमुपाकर्म ब्रह्मचारिणाम्, उत गृहस्थानाम्, उभयेषां वा । नाद्यः गृहस्थैरप्यनुष्ठीयमानत्वात् । न द्वितीयः - स्वाध्यायांगत्वात् । न तृतीयः प्रमाणाभावात् । अत्रोच्यते- उभयविषयं तदिति । 'श्रावण्यां पौर्णमास्याम्' इत्यापस्तंबेन ब्रह्मचारिणामुपाकर्मविधानात् गृहस्थानां च 'समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरः' इति शौनकस्मरणाच्च । अत्र कल्पशब्दप्रयोगात् व्रते ब्रह्मचारिभ्यो गृहस्थस्य किंचिन्न्यूनतावगम्यते । मेखलाजिनदण्डधारणाभावाद् गृहस्थस्य विरुद्धत्वाच्च । अत्राविरुद्धमुपवीतधारणं तर्पणं होमश्च ।अत्र भरद्वाजः -

अथ यज्ञोपवीतस्य धारणे कथ्यते विधिः ।
स्नात्वा शुद्धः शुचौ देशे प्रक्षाळितपदद्वयः ॥

सपवित्रकरद्वन्द्वः कृतोपस्पर्शनो द्विजः ।
उपविश्यासने दार्भे प्राणानायम्य वाग्यतः ॥

मन्त्रं सदैवमुच्चार्य ब्रह्मसूत्रं गळे क्षिपेत् ।
दक्षिणं बाहुमुद्धृत्य शिरसैव सह द्विजः ॥

गृहस्थस्य वनस्थस्य सूत्रं प्रति पुनः पुनः ।
मन्त्रस्योच्चरणाचामद्वितयं क्रमशस्स्मृतम् ॥

तस्मात्प्राङ्मुख उदङ्मुखो वाऽनार्द्रवस्त्रस्सन्नुपविश्य संकल्प्य सऋषिच्छन्दोदैवतं मन्त्रमुच्चार्य यज्ञोपवीतं धारयेन्नार्द्रवस्त्रो न प्रह्वो न तिष्ठन्वा । अत्र शाण्डिल्यः -

आर्द्रवासा न कुर्वीत कर्म किञ्चित्कथंचन ।
राक्षसं तद्धि विज्ञेयं तस्मात्तत्परिवर्जयेत् ॥

अत्र स्मृत्यन्तरम् -

उपाकर्मणि सन्धार्यमुपवीतादिकं नवम् ।
अनवं वा नवं वापि पुरातनमिह त्यजेत् ॥
अतः पूर्वधृतोपवीतस्य त्याग एव न धारणम् ।

स्मृतिभास्करे -

मौञ्जी यज्ञोपवीतादीन् नवानेव तु धारयेत् ।
कटिसूत्रं नवं चैव नवं वस्त्रमुपाकृतौ ॥

एवमेव प्राजापत्यादिव्रतचतुष्टये च ।

मेखलामजिनं दण्डं वस्त्रं यज्ञोपवीतकम् ।
पूर्वोपयुक्तान्युत्सृज्य धारयेयुर्व्रते व्रते ॥

कपर्दी -

प्रजापति मुखान्देवानेकैकं त्रिस्तिलोदकम् ।
उद्धृत्य तर्पणं कुर्युः श्रावण्यां तैत्तिरीयकाः ॥

तस्मादिदमधीतवेदानां गृहिणां चावश्यं कर्तव्यम् । तथा ज्योतिश्शास्त्रे -

अधीतवेदविद्यानां कर्तव्यं हि द्विजन्मनाम् ।
अध्यायांगमिदं प्रोक्तमिति होवाच भार्गवः ॥

गोभिलः -

अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके ।
पूर्वाह्णके विसर्गस्स्यादिति वेदविदो विदुः॥

एवमुत्सर्गस्य प्रातःकालीनत्वेन तदकरणे प्रायश्चित्तार्थतया 'एवमन्येष्वपतनीयेष्वदोषवत्सु' इत्यनुक्तप्रायश्चित्तेषु कर्मसु

पापाल्पीयस्त्वभूयस्त्वाभिप्रायेण 'संवत्सरमाचार्यहितः' इत्यादिभिर्विहितप्रायश्चित्तषट्के काममन्युभ्यां वा जुहुयात्। 'कामोऽकार्षीन्मन्युरकार्षीदितिजपेद्वा।' इति विहितजपः प्रातरेव कर्तव्यः। नत्वपराह्णे। उत्सर्ग कालत्वाभावात्। तदकरण-निमित्तोऽयं हि जपः। यत्त्विदं वचनम् -

श्रवणे न तु यत्कर्म उत्तराषाढसंयुतम्।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति॥ इति।

तद् बह्वृचविषयम्। तदुपाकर्मणः श्रवण प्रधानत्वात्। श्रवणा-संभवे श्रविष्ठासु कुर्यात्। तथा ज्योतिश्शास्त्रे -

'श्रविष्ठासु च तत्कुर्याच्छ्रवणे कर्म यद् भवेत्।
तत्कर्म सफलं विद्या दुपाकरणसंज्ञितम्॥

यच्चापरं वचनम् -

स्यात्पूर्वाषाढनक्षत्रं संगवात्परतो यदि।
वत्सराध्ययनकृतं पुण्यं सद्यो विनश्यति॥ इति,

तदपि 'वस्वर्कविष्णु विश्वेषु उपाकृतिरथर्वणाम्।' इति वस्वाद्यन्यतमर्क्षे अथर्वोपाकर्मस्मरणात्तद्विषयम्। यजुश्शाखिनां तु 'विश्वविष्णुवसुभेषु' इत्युक्तं द्रष्टव्यम्। नृसिंहश्च -

श्रावण्यां श्रवणर्क्षे वा कर्तव्या वासवेऽपि वा ।
वारुणे प्रोष्ठपन्मासि पौर्णमास्यामुपाकृतिः ।।
उभयोर्मासि हस्ते वा पञ्चम्यां वा द्वयोर्बुधः ।

ज्योतिश्शास्त्रे च-

सङ्गवात्प्राक् श्रवणभं तदूर्ध्वं वसुभं यदि ।
अमृतं योग इत्युक्तं ग्रहणं स्यान्न दोषकृत् ।।

मन्दवारं भौमवारं प्रौष्ठपद्यामथापि वा ।
पौर्णमास्यां संयुतं चेदुपाकर्म न कारयेत् ।।

अत्र श्रावण्यां मन्दभौमवारयोगे न दोषः । 'पौष्ठपद्या' मिति विशेषितत्वात् 'तारवारतिथिजाः' इति स्मृतेश्च ।

वारुणं भौमवारेण युक्तं मरणदं भवेत् ।
तस्मात्तं वर्जयेद्धीमान्मृत्युयोग इतीरितः ।।

श्रावण्यां वारुणं शस्तं पौर्णमास्यां विशेषतः ।
वर्जयेत् प्रौष्ठपद्यां तच्छ्रावण्यां तु न दोषकृत् ।।
तस्मात्काले तु संप्राप्ते न त्यजन्ति बुधा विधिम् ।

उत्सर्जनविषये मनुः -

पुष्ये तु च्छन्दसां कुर्याद् बहिरुत्सर्जनं द्विजः ।
माघशुद्धस्य वा प्राप्ते पूर्वाह्ने प्रथमेऽहनि ॥

याज्ञवल्क्यश्च -

पौषमासे च रोहिण्यामष्टकायामथापि वा ।
जलान्ते च्छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥

अत्र च्छन्दोगानां विशेषमाह गोभिलः -

छन्दोगाभिहिताः कुर्युः प्रातरौत्सर्गिक क्रियाः ।
अपराह्नेऽप्युपाकर्म पुष्यहस्तर्क्षयो र्द्विजः ॥ इति ।

तदेवमुत्सर्गाकरण प्रायश्चित्तार्थं 'कामोऽकार्षीन्मन्युरकार्षी' दिति मन्त्रमष्टोत्तरसहस्त्रं यथाशक्ति वा प्रातःकाले जपित्वा अपराह्ने स्नात्वा धौतं परिधाय माध्याह्निकीं क्रियां कृत्वा प्राङ्मुख उदङ्मुखो वा उपविश्य पवित्रपाणिः त्रिः प्राणानायम्य संकल्प्य यज्ञोपवीतं धृत्वा गृहस्थः प्रतियज्ञोपवीतमाचम्य मन्त्रमुच्चारयेत् । ब्रह्मचारी तूपविश्यानन्तरं मेखलाजिनदण्डान् 'इयंदुरुक्तात्' 'मित्रस्य चक्षुः', 'सुश्रवः' इतिमन्त्रैः क्रमेण धृत्वाऽऽचामेत् । अथाचार्यः शिष्यैस्सह स्नात्वा उदङ्मुख उपविश्य जले निवीती ऋषितीर्थेन तिलाञ्जलिभिः 'प्रजापतिं काण्डऋषिं तर्पयामि'

इत्यादिभिर्मन्त्रैर्नवभिः काण्डर्षीनेकैकं त्रिस्तर्पयित्वाऽऽचम्य वस्त्रं परिधाय गृहमागत्याग्नेरुपसमाधानाद्यग्निमुखान्तं कृत्वा शिष्यैरन्वारब्धः प्रजापतिमुखान् ऋषीन्नवाहुतिभिर्हुत्वाऽऽद्यानुवाकानिषेत्वेत्यादींश्चतुरोध्याप्य जयादीन्हुत्वा तन्त्रशेषं समाप्याभ्युदयश्राद्धं कृत्वा पुण्याहं वाचयेत् । एवं प्रत्यब्दं श्रावण्यामेवोपाकर्म कार्यम् । अत्र कात्यायनः -

अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत् ।। इति ।

श्रावणी पौर्णमासी स्यात्संगवात्परतो यदि ।
तदेवौदयिकं ग्राह्यं नान्यद्वृद्धिमभीप्सुभिः ।।

अन्वाधानदिने कुर्यादुपाकर्मादिकं सदा ।
एतद्याजुषिकं विद्धि वसिष्ठवचनं यथा ।।

बृहस्पतिः -

हस्त श्रवणपर्वाणि ग्राह्याण्यौदयिकानि तु ।
हस्तर्क्षं संगवस्पृष्टं त्रिमुहूर्तं तु वैष्णवम् ।।
संगवात्परतस्स्याच्चेत् पूर्णिमौदयिकी स्मृता ।।

इत्युपाकर्मनिर्णयस्समाप्तः ।

# प्रवरनिर्णयः ।

एकत्रऋष्यन्वयाच्चैक्या न्निषिद्धा ये करग्रहे ।
वक्ष्ये तान् संकलय्याहं समानप्रवरान् स्फुटम् ॥

ब्रवीम्यग्रे समानार्षानापस्तंबर्षिसंमतान् ।
तत्तत्सूत्रपरीहार्यं मतभेदं भणाम्यनु ॥

जमदग्निश्च वत्सश्च सावर्णिश्चैतिशायनः ।
[1]चिरजीवी च जाबालि [2]मण्डुप्राचीनयोग्यकाः ॥

वैरोहित्यो भार्गवश्च च्यवनश्चाप्नुवानकः ।
और्वारुसार्ष्टिषेणाश्च मिथष्षोडश[3] नान्वयुः ॥

वीतहव्यश्च वाधूलो यास्को मौनश्च भार्गवः ।
मौक स्सावेदसस्सप्त नोद्वहेयुः परस्परम् ॥

---

1. चिरजीवी च → चिरजीवन्ति (पा)
2. मण्डु → मुड्ड (पा)
3. अत्र चतुर्दशानामेव सत्त्वात् षोडशत्वं चिन्त्यम् ।

गृत्सोमदश्च शुनको भार्गवो नान्वयुर्मिथः ।
वाध्र्यश्वो मित्रयुश्चैव भार्गवो नान्वयुर्मिथः ।।
वैनश्च भार्गवः पार्थो नोद्वहेयु र्मिथस्त्रयः ।

जमदग्न्यादयो ह्यष्टाविंशतिस्तु भृगोर्गणः ।
तेषां भार्गवगोत्रेण नान्योन्यं पाणिपीडनम् ।।

गौतमो यास्य औचथ्य औशिजो वामदेवकः ।
बृहदुक्थोंगिराः कुक्षीवानष्टौ नान्वयुर्मिथः ।।

भरद्वाजस्त्वग्निवेश्यो जायनौ शैन्यशैशिरी ।
सर्वस्तंबः कुशः शुङ्गो गार्ग्याङ्गिरसबान्धवाः ।।

आक्षिलो मातवचसौ वार्हस्पत्यस्तथा करः ।
[1]चौक्षिस्सप्तदशान्योन्यं न कुर्युः पाणिपीडनम् ।।

कपिश्चोरुक्षया [2]ह्यार्याङ्गिरसा नान्वयुर्मिथः ।
हरिताङ्गिरसौ कुत्सयौवनाश्वांबरीषकाः ।।

मान्धाता च षडन्योन्यं न कुर्युः पाणिपीडनम् ।
कण्वाजमीडांगिरसो नेतरेतरमन्वयुः ।।

1. चौक्षिः → रौक्षिः, कौक्षिः (पा) 2. ह्यार्या → ह्यय्या-(पा)

विरूपांगिरसावाष्टादंष्ट्रश्चापि रथीतरः ।
बृहदश्वश्च पञ्चैते नोद्वहेयुः परस्परम् ॥

मुद्गलस्तार्क्ष्य [1]भाम्यर्श्चाङ्गिरसो नान्वयुर्मिथः ।
विष्णुवृद्धस्त्रसदस्युः पुरुकुत्सश्च भद्रणः ॥

मद्रणश्शठमर्षणश्च सात्यकिर्बादरायणः।
सात्यकाम्यौपमित्यौपगव्यांगिरसतुण्डिनः ॥

आरुणिश्च मिथश्चैते नोद्वहेयु श्चतुर्दश ।
चतुःपञ्चाशदृषयो गौतमाद्यंगिरोगणः ॥

गोत्रेणांगिरसाख्येन विवहेयुर्न ते मिथः ।
अत्र्यर्चनानसौ बीजावापातिथि गविष्ठिराः ॥
सुमंगलो वामरथ्यश्श्यावाश्वो नान्वयुर्मिथः ।

विश्वामित्रो देवरातो मनुस्तन्त्वौल्वकीबवः ।
चकितो वारकोलूकयाज्ञवल्क्यधनञ्जयाः ॥

शालालिबृहदग्निश्च बभ्रुशालावतौदलाः ।
शालंकायनपौराणश्रौमताः कामजायनः ॥

1. भाम्यर्ा → भाक्यर्ा (पा)

देवश्रवोमधुच्छन्दो लौहित्याज्याष्टकास्तथा ।
पारिधापनमात्कील कत शैशिर कौशिकाः ॥

कुशश्च दैवतरसकालशुङ्गाघमर्षणाः ।
वैश्वामित्रा श्चतुस्त्रिंशदेते नान्योन्यमन्वयुः ॥

काश्यपो नैध्रुवो रेफो देवल [1]श्शाण्डिलोसितः ।
वात्सरश्चेति सप्तैते नोद्वहेयुः परस्परम् ॥

वसिष्ठेन्द्रप्रमाथौ च भरद्वसुपराशरौ ।
शक्तिश्च पूतिमाषश्च मैत्रावरुणसंकृती ॥

कुण्डिनो गौरवीतश्च दशैते नान्वयुर्मिथः ।
अगस्त्य दाण्ड्यवीतेध्मवाहास्ते नान्वयुर्मिथः ॥

इत्यापस्तंबसूत्रे [illegible]संग्रहः ॥

अत्र बोधायनः –

सगोत्रं चेदमत्योपयच्छेन्मातृवदेनां बिभृयात् । सगोत्रां गत्वा चान्द्रायणमुपदिशेत् । व्रते परिनिष्ठितेऽत्यजन्मातृवद्भगिनीवत् । गर्भो न दुष्यत इति विज्ञायते । बुद्धिपूर्वे शठारिः-

1. शाण्डिलोसितः → शाण्डिलोद्भृतः

परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्यां समुत्सर्गमतिकृच्छ्रं समाचरेत् ।।

समानप्रवरां कन्यामेकगोत्रामथापि वा ।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ।।

उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् ।
तस्यामुत्पाद्य चण्डालो ब्राह्मण्यादेव हीयते ।।

अत्र बोधायन कारिका -

यदि कश्चित्तु कामेन कन्यामूढ्वोपगच्छति ।
गुरुतल्पव्रताच्छुद्धो गर्भश्चेदत्र तां त्यजेत् ।।
अज्ञानादैन्दवेनैव शुध्येद्गर्भस्तु काश्यपः ।।

तथा संग्रहान्तरे -

समानप्रवरां कन्यां कामतः परिणीय यः ।
प्रजामुत्पादयेत्कुर्याद्गुरुतल्पव्रतं द्विजः ।।

चण्डालेषु प्रजां त्यक्त्वा व्रतं तु मरणान्तिकम् ।
कामाद्विवाहमात्रे वा प्रजासूत्पादितासु वा ।।

तासां चण्डालवासस्स्याद् व्रतं प्राणान्तिकं चरेत् ।
अकामतश्चाब्दकृच्छ्रं चरेन्नियममास्थितः ॥

तत्प्रजाया भरद्वाजगोत्रान्तर्भाव इष्यते ।
चान्द्रायणं प्रजाभावे कृच्छ्रमुद्वाहमात्रके ॥
मिन्दाहोमं च कुर्वीत व्रतान्तेऽष्टोत्तरं शतम् ॥

तथान्यत्र संग्रहे -

स्वगोत्राद्यनभिज्ञश्चेद्विप्र आचार्यगोत्रकः ।
दानादिनान्यगोत्रस्स्यादज्ञातगुरुगोत्रकः ॥

अत्र बोधायनः -

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनात् ॥

अवद्योऽत्रगणे शस्ते ह्यष्टादशगणान्मुनीन् ।
विना नृवृत्तं तेष्वेते विवहेयुर्गणा मिथः ॥

उपमन्युवसिष्ठैस्तु तथा [1]ह्याहुतगोत्रिभिः ।
सोमवाहो यज्ञवाहः शान्तवाहश्च सांभवः ।

1 ह्याहुत → वा हुत (पा)

अगस्तिभिर्द्वैतमसोशनः कारेणुपालयः ।
शरद्वन्तः कुमण्डश्च गौतमै र्नान्वयुर्मिथः ।।
विशेषोऽत्र स्वकीयानामिति बोधायनोदितः ।

गौतमैर्दीर्घतमसः [1]सोमराजमरुद्गणाः ।
हारीतैः पिंगळो दर्भस्तथा हैमगवाह्वयः ।।

वसिष्ठैरंगिरास्तण्डी शंखशैवगवास्तथा ।
विश्वामित्रैर्गालवश्च रेणुगाधिनरौ तथा ।।

वीतिहव्यश्शार्कराक्षिजीवन्त्यायनसार्ष्टयः ।
शालंकायनकाश्चैते नोद्वहेयुः परस्परम् ।।

श्येनो वैन्यैर्दिवोदासो वाध्र्यश्वैश्शुनहोत्रकः ।
तथा भात्समदैर्घोरः काश्यपैर्नोद्वहेन्मिथः ।।

त्र्यहाश्वलायनो धूम्रो जरठस्त्वेकहव्यकः ।
जाबालो बन्धकिस्सूनु र्वनजो बादरायणः ।।
एतेऽष्टौ नोद्वहेयुस्ते विश्वामित्रैरितीतरे ।।

विश्वामित्र वसिष्ठाभ्यां लोकाक्षिर्न खलूद्वहेत् ।
विश्वामित्रभरद्वाजगोत्राभ्यां नोद्वहेत्कपिः ।।

1. सोमराजमरुद्गणाः → सोमरक्युरुभूगणाः (पा)

भरद्वाज [1]कताभ्यां तु नोद्वहेच्छुंगशैशिरिः ।
द्व्यामुष्यायणकाह्येते तस्मात्क्षेत्रजदत्तकौ ।।

पुत्रिकापुत्र इत्येतैर्वर्ज्यं गोत्रद्वयं त्रिभिः ।
गोत्राज्ञाने भवेद्गोत्रमुपसेतुरिति स्थितिः ।।

स उद्वाहे परिहरेत्तद्गोत्रप्रवरौ ततः ।
समानार्षां सगोत्रां वा सपिण्डां वोद्वहेद्यदि ।।

मोहात्कृच्छ्रं धिया चान्द्रं मातृवत्तां तु पालयेत् ।
मोहाद्गर्भोद्भवे त्वब्दकृच्छ्रं गर्भस्तु काश्यपः ।।

ज्ञानादुद्वाह्य गर्भश्चेद्गुरुतल्पव्रतं चरेत् ।
सहान्त्यैर्वासयेद्गर्भमगर्भेऽभ्यसने पतेत् ।।

मातृतः पञ्चमात्पुंसः प्राक्तनीं सप्तमात्पितुः ।
समानार्षां सगोत्रां वा नोद्वहेदुद्वहन् पतेत् ।।

समानप्रवरश्वभ्रं तरीतुं गृह्यतां स्मृतीः ।
विमृश्य बहुधा बह्वीः कृतः प्रवरनिर्णयः ।।

इति प्रवरनिर्णयः समाप्तः ।

1कताभ्यां → कठाभ्यां (पा)

# समानप्रवरनिर्णयः ।

अथातस्समानप्रवरान्निर्णेष्यामः । वंशपरम्पराप्रसिद्धं गोत्रम् । ते जमदग्न्यादयस्तत्सन्तानाः प्रवराः। ते भार्गवच्यवनादयः । एकद्वित्रिपञ्चार्षेयास्ते पुनरेकोनपञ्चाशत् । तेषां गोत्रभेदेऽपि मिथस्संबन्धाविशेषात् ते सर्वे समानप्रवराः । तेषु च भृग्वंगिरोगणयोः पञ्चार्षेयेषु ऋषित्रयानुवृत्तौ त्र्यार्षेयेषु ऋषिद्वयानुवृत्ता वन्यत्र प्रवरेष्वेकर्ष्यनुवृत्तौ च ते सर्वे समानप्रवराः।

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वंगिरोगणेष्वेव शेषेष्वेकं निवारयेत् ।।

इति होचुः । अत्र बोधायनः -

'एक, एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वमन्यद्भृग्वंगिरोगणात् ।।' इति ।

तस्मादस्माभिर्विस्पष्टं समानप्रवरान् संकलय्य कथनादष्टादशगणा भवन्ति ।

आरूढपतितापत्यं ब्राह्मण्यं शूद्रजश्च यः ।

तावुभौ विद्धि चण्डालौ सगोत्राद्यश्च जायते ।।

इति बोधायनस्मरणात् सपिण्डां सगोत्रां समानप्रवरां कन्यां नोद्वहेयुः। स्वं स्वं गणं हित्वा परस्परं गणाः परिणयेयुः । अत्रानुवृत्तमृषिं वर्जयेयुः । तेषु ऋषिभेदमतभेदानुत्तरत्रोदाहरिष्यामः । अत्रापस्तंबोक्ता ये समानार्षेयास्ताननुक्रमिष्यामः -'जमदग्नि वत्ससावर्णि जीवन्ति जाबाल्यैतिशायन वैरोहित्यजडमन्दु प्राचीनयोग्य भार्गवच्यवनाप्नुवानौर्वार्ष्टिषेणानूपाः षोडशमुनयो जमदग्निगणास्ते मिथो नोद्वहेयुः । एवमाद्याद्यस्यर्षेर्गणं विद्यात् । वीतहव्ययास्क वाधूल मौन मौक भार्गव सावेदसास्सप्त मिथो नोद्वहेयुः । गृत्समदशुनकभार्गवास्त्रयो मिथो नोद्वहेयुः । वाध्र्यश्वमित्रयुभार्गवास्त्रयो मिथो नोद्वहेयुः । वैन्यपार्थ भार्गवास्त्रयो मिथो नोद्वहेयुः । [1]एतेऽष्टादशमुनयो भृगुगणास्ते भार्गवेण मिथो नोद्वहेयुः । गौतमयास्यौचथ्यासिज वामदेवांगिरस कौक्षीवत बृहदुक्थ्या अष्टौ मिथो नोद्वहेयुः । भरद्वाजकुत्साग्निवेश्यौर्जायन

1 षोडाशानामेवात्र दृश्यमानत्वात् अष्टादशेतिचिन्त्यम्: ग्रन्थपातो वा स्यात् क्वचित्पुस्तके 'एतेषांविंशतिमुनय' इत्यादि पाठान्तरम् ।

सर्वस्तंबकुशशुंगशैशिरिकतवैन्यगर्गाङ्गिरसबार्हस्पत्याक्षील
काकाक्षमननमातवचसास्सप्तदश मिथो नोद्वहेयुः। कप्यंगिरो-
हार्युरुक्षयाश्चत्वारो मिथो नोद्वहेयुः । हारीतांगिरसांबरीष
यौवनाश्वमान्धातृकुत्साः षण्मिथो नोद्वहेयुः । कण्वाजामीडांगिर-
सास्त्रयो मिथो नोद्वहेयुः । विरूपरथीतरांगिरसपार्षदश्वाष्टदंष्ट्राः पञ्च
मिथो नोद्वहेयुः । मुद्गलांगिरसभाम्याश्वताण्ड्याश्चत्वारो मिथो
नोद्वहेयुः । विष्णुवृद्धशठमर्षण भद्रणमद्रण बादरायणौपमित्यौप-
गविसात्यकिसात्यकाम्यारुणिमन्दांगिरस पौरुकुत्सत्रसदस्या-
श्चतुर्दश मिथो नोद्वहेयुः । गौतमाद्यष्टगणाश्चतुःपञ्चाशन्मुनयो
अङ्गिरोगणास्त आङ्गिरसा मिथो नोद्वहेयुः । अत्र्यर्चनानस-
शावाश्वगविष्ठिरातिथि वामरथ्य सुमंगल बीजावापिनोऽष्टौ मिथो
नोद्वहेयुः । विश्वामित्रदेवरातचकितमनस्तन्तौल्वकीवालक-
याज्ञवल्क्योलूक बृहदग्निबभ्रुशालालिशालावतशालंकायन
कालबम्भौलवश्रौमतकामकायन दैवश्रवसदैवतरसाज्य-
मधुच्छन्दसधनञ्जयाष्टकलोहित पौराणपरिधापमात्कील शुंग
कतशैशिरि कुशाघमर्षणकौशिकाश्चतुस्त्रिंशन्मिथो नोद्वहेयुः ।
काश्यपावत्सारनैध्रवरेफशण्डिलदेवलासितास्सप्त मिथो नोद्वहेयुः ।

वसिष्ठेन्द्र प्रमथ भरद्वसुपाराशरशक्तिकुण्डिन मैत्रावरुण पूतिमाष संकृतिगौरवीता दश मिथो नोद्वहेयुः । अगस्त्यदाल्भ्याच्युतेध्मवाहास्त्रयो मिथो नोद्वहेयुः । आपस्तंबो बाहुतो त्रिभिरुपमन्युर्वसिष्ठैः सांभवशान्तवाहयज्ञवाह सोमवाहा अगस्तिभिश्शरद्वन्त कौमण्डदैर्घ्यतमसकारेणुपालौशनसा गौतमैर्नोद्वहेयुः' इति । बोधायनः (वा)-'ऋतुगण सोमराज दैर्घ्यतमसागौतमैः पिंगलदर्भहैमगवा हारीतै स्तण्डिशंब शैवगवांगिरसा वसिष्ठैः गालवरेणुगाधिनराविश्वामित्रैः शालंकायन शार्कराक्षिसार्ष्टिजीवन्त्यायना वीतहव्यैर्नोद्वहेयुः । काश्यपैर्घोरोवन्यैश्श्येनो वाध्र्यश्वैर्दैवोदासो गार्त्समदैः शुनहोत्रो नोद्वहेत्' इति । आश्वलायना जालकि बान्धकिबादरायणसूनुपनसधूम्रजरठैकहव्यविश्वामित्रैर्नोद्वहेयुरित्येके । भरद्वाजविश्वामित्राभ्यां कपिर्वसिष्ठविश्वामित्राभ्यां लौकाक्षिर्भरद्वाजकताभ्यां शृंगशैशिरिर्नोद्वहेदिति सर्वे । तस्माद्द्व्यामुष्यायणाः पुत्रिकापुत्रदत्तक्षेत्रजाः गोत्रद्वयं परिहरेयुः । अज्ञातगोत्रा उपसेतुगोत्रप्रवरौ परिहरेयुः । मोहात्सपिण्डासगोत्रा समानप्रवरा विवाहे प्राजापत्यं कुर्यान्मिन्दाहोमं च । तां मातृवत्परिपालयेत् । ज्ञानाच्चान्द्रायणम् । तस्या-

मकामतो गर्भोत्पादने अब्दकृच्छ्रं कुर्यात् । स गर्भः काश्यपो भरद्वाजो वा। ज्ञानतः प्रजोत्पादे गर्भमन्त्यैस्सह वासयेत्। जनकस्तु गुरुतल्पव्रतंचरेदिति ॥

इति समानप्रवरनिर्णयः समाप्तः

# विवाह्यकन्या निर्णयः

इदमिदानीं निरूप्यते का नाम कन्या विवाह्या कीदृशी वा त्याज्येति। अत्र मनुः -

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।।

मातृसंताने पुनरसगोत्रत्वेन विवाहे प्राप्ते तन्निषेधार्थमसपिण्डेति। ततश्च मातुः प्रपितामहस्य कूटस्थत्वात् तत्सन्तानेषु पञ्चमावधि सापिण्ड्यस्मरणा द्वरस्य चतुर्थी पञ्चमी वा कन्या न विवाह्येत्युक्तं भवति। चकारात्पितुश्चासपिण्डा प्रशस्ता। अयमर्थः - पितृसन्ताने सप्तमावधिसपिण्डत्वस्मरणात् पित्राद्यैषड्भिः पुत्राद्यैषड्भिस्सह मध्यस्थस्य कूटस्थस्य सप्तमत्वात् तेषु यतः सन्तानभेदस्तमादाय संख्याय सप्तमीमतीत्य वरस्स्याष्टमी विवाह्येति। एभ्योऽन्यत्र असपिण्डत्वेन विवाहे प्रसक्ते स मा भूदित्यसगोत्रेत्युक्तम्। चकारात्समानप्रवरा च। ततश्च पञ्चमावधिमातृसपिण्डा

सप्तमावधिपितृसपिण्डा समानप्रवरा पितृसगोत्रा च नोद्वाह्येति सिद्धम् । पितृग्रहणान्मातृसगोत्रा परिणेया । ननु 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि' इति व्यासस्मरणात्कथं सा विवाह्येति चेन्न - पुत्रिकाकरणे तस्यास्त्यागाभावेन गोत्रनिवृत्त्य-भावाद् दौहित्रस्य द्व्यामुष्यायणत्वेन मातृसगोत्रानिषेधपरत्वात् तस्य । तच्च सूचितम् 'एके' इति वदता । एवं 'मातृगोत्रां तथैव च' इत्यादिकं द्रष्टव्यम् । अनीदृशी मातृसगोत्रा विवाह्यैव । मनुना मातुरसगोत्रेत्यनुक्त्वा असपिण्डेत्युक्तेः । सापिण्ड्यावधिमाह याज्ञयल्क्यः -

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां [redacted]पिण्डां यवीयसीम् ॥

अरोगिणीं भ्रातृ[redacted]म् ।
पञ्चमात्सप्त[redacted]ादूर्ध्वं मातृतः पितृतस्तथा ॥ इति ।

'अविप्लुतब्रह्मचर्यः' -

ब्रह्मचर्यं तपो भैक्षं सन्ध्ययोरग्निकर्म च ।
स्वाध्यायो गुरुवृत्तिश्च चर्येयं ब्रह्मचारिणः ॥

इत्युक्तब्रह्मचर्यविप्लवे प्रायश्चित्तमकृत्वा नोद्वहेदित्यर्थः। अनन्यपूर्विकाम् - दानेन भोगेन वान्येनापरिगृहीताम्। असपिण्डाम्- मातृतः पितृतश्च एकशरीरावयवान्वयरहिताम्। 'यवीयसीम्' - अत्र विष्णुः -

वर्षैरेकगुणां भार्यामुद्वहेत् त्रिगुणो वरः।
द्व्यष्टवर्षोऽष्टवर्षां वा वयोमात्रावरा च या॥

वयोमात्रावरेत्युक्तेर्द्वित्रैः कतिपयैर्वा मासैरूना नोद्वाह्या। नारदश्च -

हीनांगामधिकांगां च वराद्दीर्घां वयोधिकाम्।
नोपेयाद्गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः॥

'अरोगिणीम्' -

वातव्याध्यश्मरीकुष्ठमहोदरभगन्दराः।
अर्शांसि ग्रहिणीत्यष्टौ महारोगाः प्रकीर्तिताः॥

इत्युक्तमहारोगरहिताम्। भ्रातृमतीम् - पुत्रिकाकरणशंकया। असमानार्षगोत्रजाम् - गोत्रं प्रसिद्धम्, ऋषेरिदमार्षम्। प्रवर इत्यर्थः। समानता मातृतो वेदितव्या। गोत्रप्रवरौ पृथक्पृथक्- पर्युदासे निमित्तम्। असमानगोत्रजा असमानप्रवरा च विवाह्येत्यर्थः। 'असमानप्रवरामसगोत्रां भार्यां विन्देत', 'परिणीय

सगोत्रां तु समानप्रवरां तथा' इति च भेदेन स्मरणात् पञ्चमादिति मातृतः मातृसन्ताने पञ्चमादूर्ध्वं पितृतः पितृसन्ताने सप्तमादूर्ध्वं सापिण्डयं निवर्तत इति शेषः। अतः कन्यायाः पञ्चमसप्तमातिक्रमे सापिण्ड्याभावाद्विवाहो निर्विवादः। किञ्च 'पित्रादयःषट्सपिण्डाः पुत्रादयष्षडात्मा सप्तमः। सन्तानभेदेऽपि यतस्सन्तानभेदस्तमादाय गणयेद्यावत्सप्तम इति सर्वत्र योजनीयम्' इति विज्ञानेश्वरेण व्याख्यातम्। एतच्च सापिण्ड्यमेकशरीरावयवान्वयेन वेदितव्यम्। 'अंगादंगात्संभवसि', 'प्रजामनुप्रजायसे', 'एतत्षाट्कौशिकं शरीरं त्रीणि मातृतस्त्रीणि पितृतस्त्वङ्मांस-रुधिराणि मातृतस्नायवऽस्थिमज्जानः पितृतः' - इति तत्र तत्र अवयवान्वयप्रतिपादनात्। निर्वाप्यपिण्डान्वयेन सापिण्ड्याभिधाने मातृसन्ताने भ्रातृपितृव्यादिषु सापिण्ड्यं न स्यात्। समुदाय-शक्त्यङ्गीकारेण रूढिपरिग्रहे तत्रतत्रावगम्यमानावयवशक्तिः परित्यक्ता स्यात्। ततश्चायमवयवशक्त्या वर्तमानस्सपिण्डशब्दो निर्मन्थ्य पंकजादिशब्दवन्नियतविषय एवेति च व्याख्यातम्। चन्द्रिकायां पुनरेकोद्देश्यावच्छेदेन एकक्रियान्वयिनस्सपिण्डा इत्युक्त्या भ्रातृपितृव्यादिसापिण्ड्यसिद्धावपि स्वसृ दुहितृ

मातृष्वसृ मातुल तद्दुहितॄणामपि पिण्डदातृत्वेन पिण्डभाक्त्वेन वा एकक्रियान्वयित्वाभावेन सापिण्ड्यं न स्यात् । ततश्च पञ्चमात् सप्तमादित्यादिवचननिचयवैयर्थ्यं स्यात् । एवं च सति मातुल-सुतादीनामेकपिण्डक्रियानुप्रवेशाभावेनासपिण्डत्वात् तद्विवाह-स्सिध्यतीति गूढाभिसन्धीनां निर्वाप्यपिण्डापेक्षया सापिण्ड्य-कथनमाग्रहकृतमिति सुव्यक्तम् । किञ्च निर्वाप्यपिण्डापेक्षया सापिण्ड्यवर्णनमयुक्तम् ।'उर्ध्वं पञ्चसु पित्रादिष्वधःपुत्रादि-पञ्चसु', 'स्मृतं सजातिसापिण्ड्यमेतत्सन्ततिजेष्वपि' इति वचनविरोधापत्तेः । अतो 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपूरुषम् ॥' इति ब्राह्मोक्तसापिण्ड्यम्। 'अनन्तरः सपिण्डो यः तस्य तस्य धनं भवेत्', 'पुत्राभावे सपिण्डा मातृसपिण्डाश्शिष्याश्च दद्युः' इति मनुगौतमाद्युक्तदायभाक्त्वमौर्ध्वदैहिककर्तृविषयम्। 'अप्रत्तानां तु स्त्रीणां सापिण्ड्यं त्रिपुरुषं विज्ञायत' इति वसिष्ठवचनमाशौच-विषयत्वेन तत्प्रकरणे विज्ञानेश्वरादिभिरुदाहृतम् । अतो विवाह-विषये बहुस्मृतिसिद्धत्वान्मातृतः पञ्चमावधिकं सापिण्ड्यमिति निरवद्यम् । अत एव हि सपिण्डासमानगोत्रासमानप्रवरासु

भार्यात्वमेव नोपपद्यत इति विज्ञानेश्वरः । पातित्यादिदोष-प्रसक्तेरिति भावः । अतः प्रामाणिकानां पञ्चमात्सप्तमादूर्ध्वमेव विवाहोऽपर्यनुयोज्यः । तथा मनुः -'असपिण्डा च या मातुः' इति । याज्ञवल्क्यश्च - 'पञ्चमात्सप्तमादूर्ध्वम्' इति । गौतमश्च- 'असमानप्रवरैर्विवाह ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति ।

(शंखश्च- 'दारानाहरेत्सदृशानसमानार्षेयानसंबन्धानासप्तम-पञ्चमात्पितृमातृबन्धुभ्यः'। 'अत्राङभिविधौ' । पितृमातृबन्धुभ्य-स्सप्तमपञ्चमपूरुषैरसंबन्धां कन्यामुद्वहेदित्यर्थः ।)

वसिष्ठश्च- 'गृहस्थो वीतक्रोधहर्षो गुरुणानुज्ञातस्स्नात्वा असमानार्षेयामस्पृष्टमैथुनां (अवरवयसं) यवीयसीं सदृशीं भार्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः' इति । अतीत्येति शेष इति व्याख्यातम् । हारीतश्च -'श्वित्रिकुष्ठ्युदरि यक्ष्मामयाव्यप्यल्पायुरनार्षेयमब्रह्म समानार्षेयमित्येतान्य-पतितान्यपि कुलानि वर्जनीयानि भवन्ति । कुलानुरूपाः प्रजा भवन्तीत्यादितषडयज्ञत्वादनार्षेयमवेदत्वादब्रह्म एककुलत्वा-त्समानार्षेयमिति । तस्मात्सप्त पितृतः परीक्ष्य पञ्च मातृतो नग्निकां

श्रेष्ठां भ्रातृमतीं भार्यां विन्देत' इति। इयं पञ्चसप्तपूरुषान्तर्भूता वा परा वेति मातृतः पञ्चपुरुषान् पितृतस्सप्तपुरुषान्परीक्ष्य तदर्वाक्तनीं सपिण्डां परित्यज्य पञ्चमसप्तमपुरुषादूर्ध्ववर्तिनीमसपिण्डा-मुद्वहेदित्यर्थः । पैठीनसिः- 'असमानार्षेयां कन्यां पञ्च मातृतः परिहरेत्सप्त पितृतः ।' विष्णुश्च- 'असगोत्रामसमानप्रवरां भार्यां विन्देत मातृतः पञ्चमादूर्ध्वं पितृतस्सप्तमात्परम् ।' नारदश्च-

'आसप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा ।।'

एतानि वचनानि 'सगोत्राय दुहितरं न प्रयच्छेन्मातुश्च योनिसंबन्धेभ्यः' इति सूत्रव्याख्याने लिखितानि । एतानि मन्वादिवचनानि पञ्चमात्सप्तमादूर्ध्वं विवाहविधिमुखेन तदर्वाङ्निषेधपराणि । अत एव चन्द्रिकायां तदर्वाग्विवाहे प्रत्यवायपराणि मन्वादिवचनान्युदाहृतानि। तत्र मनुः -

पैतृष्वसेयां भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् ।।

एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ।
ज्ञातित्वेनानुपेयास्ताः पतत्यभ्युपयन्नधः।।

तत्रैव नारदश्च -

सप्तमात्पञ्चमादर्वाग्बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा ।।

तत्रैव विष्णुश्च -

'पञ्चमात्सप्तमाद्धीनां यः कन्यामुद्वहेद्द्विजः ।
गुरुतल्पी सविज्ञेयस्सगोत्रां चैवमुद्वहन् ।।'

गुरुतल्पी - गुरुतल्पव्रतार्ह इत्यर्थः । अत्रैव मरीचिश्च -

'पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ।।'

इतीदं वचनं सायणीये चन्द्रिकायां चोदाहृतम् । आपस्तंबश्च- 'अथ पतनीयानि स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुः पितुरितियोनिसंबन्धे सहापत्ये स्त्रीगमनम्' इति । योनिसंबन्धाः पञ्चमसप्तमपुरुषान्तर्वर्तिन्यः । तासां गमनं पतनीयमतस्ता नोद्वहेदित्यर्थः । गौतमश्च - 'ब्रह्महसुरापगुरुतल्पगमातापितृयोनिसंबन्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतिताऽत्याग्यपतितत्यागिनः पतिताः पातकिसंयोजकाश्च' इति । 'मातृपितृयोनिसंबन्धाः' - 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च

मातृबन्धुभ्यश्च पञ्चमात्' इति तेनैवोक्तेस्तदन्तर्वर्तिन्य इत्यर्थः। ता मातृतः पितृतः पञ्चमसप्तमपुरुषान्तर्वर्तिनीर्गच्छतीति मातृपितृयोनिसंबन्धागः। स च ब्रह्महादिसहपाठात्पतित इत्यर्थः। अतस्ता न विवाह्याः। तथा चन्द्रिकायाम् -

स्त्रीसन्ततिस्तथापुंसामविवाह्ये उभे मते।
स्त्रीपुंसोस्तु विवाह्या स्यात्पञ्चमात्सप्तमात्परा ।। इति।

अतो विवाहे पञ्चमान्तं कन्यासापिण्ड्यं मातृपक्षे, सप्तमान्तं पितृपक्ष इति सिद्धम्। एवं पञ्चमसप्तमान्तं कन्यासापिण्ड्यस्मरणं सजातीयविषयमेव। तथा विज्ञानेश्वरीये - " 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति पञ्चमसप्तमावधिकं सापिण्ड्यं व्याख्याय 'एतच्च समान जातीयविषये द्रष्टव्यम', विजातीयविषये तु विशेषः।" तथा शंखः -

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ।।

एकजाताः - एकस्माद्ब्राह्मणादेर्जाताः, पृथक्क्षेत्राः - भिन्नजातीयासु स्त्रीषु जाताः, पृथक्जना :- समान जातीयासु भिन्नासु स्त्रीषु जाताः, ते एकपिण्डाः - सपिण्डाः, पिण्डस्त्वावर्तते

त्रिषु - त्रिपौरुषमेव सापिण्ड्यमित्यर्थः, इति प्रतिपादितम्। पृथग्जना इति बीजिपितृविषयम्। 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च' इति नियोगविषयम्। तदेवं 'चतुर्थीमुद्वहेत्कन्याम्' इति वचनमदृष्टमूलं मानुषं वाऽऽर्षं वा विजातीयविषयमेवेति शेमुषीविशेषजुषां विदुषां सुव्यक्तम्। विजातीयस्य सापिण्ड्याभावेन चतुर्थीविवाहस्याव्याहतत्वात्, सजातीयानां तु सपिण्डत्वेन निषिद्धत्वाद्, 'गुरुतल्पी स विज्ञेयः' इति गुरुतल्पव्रतातिदेशाच्च पञ्चमसप्तमाधोवर्तिनीविवाहस्य वर्जनीयत्वमवर्जनीयम्। अतो निष्प्रमाणकोऽयं तदर्वाग्विवाहः। आचारदर्शनात्तन्मूलं प्रमाणं कल्प्यमिति चेन्न-अकृत्यानामपि तत्कल्पनप्रसक्तेः। प्रत्यक्षप्रबलबहुप्रमाणविरोधान्न तत्कल्पनमिति तुल्यम्। तदर्वाग्विवाहनिषेधपरवचनानां भूयस्त्वेन बलीयस्त्वाच्च। हन्तैवं तर्हि लोकाचारो विहन्यत इति चेत् किमु वक्तव्यम्। निषिद्धकरणविहिताकरणाभ्यां स्वतो विहतत्वात्। यथाह याज्ञवल्क्यः -

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥ इति।

पञ्चमात्सप्तमादूर्ध्वमेव विहितो विवाहः। तदर्वाङ्निषिद्धश्च। तर्हि

लोको भृशं कुप्यतीति चेत् कुप्यतु कामम् । किं कुर्मो वयम् । महर्षयो ह्येवमस्मार्षुः । अह ह निषेद्धॄणां महर्षीणां किं तदानीमेवं नावोचो निषेधे लोकः कुप्यतीति । जल्पन्तु मुनयः । तदुक्तं केन कर्तुं शक्यते । लोकाचारः प्रमाणमितिचेन्मैवम्। विहित करणस्यैवाचारत्वात् । अन्यथा अकृत्यकरणस्याप्याचारत्व-प्रसक्तेः । तस्यैव लोके बाहुल्यादकृत्यमाचारो न भवतीतिचेत्-सत्यम् । किंकिमकृत्यम्? निषिद्धकरणमितिचेत्तर्हि पञ्चमादर्वा-ग्विवाहस्य निषिद्धत्वेनाकृत्यत्वं त्वयैवोपपादितम् । नैतदकृत्यं व्यभिचारादिवल्लोके गर्हाविरहात् - मैवम् । वृथापाकग्रामयाजक-भृतकाध्यापकवेदविप्लावकमाहिषिकवार्धुषिकादिवृत्तस्यापि प्रामाण्यप्रसक्तेः । न हि तेषु लोकगर्हास्ति, प्रत्युत प्रशंसैव । अतस्तादृशाचारभूयस्त्वनिबन्धनो गर्हाविरहस्तस्यापि तथात्वाच्च । न हि तावता तस्याचारत्वं शास्त्रस्यान्यथात्वं वा । तर्हि शिष्टाचारः प्रमाणमितिचेत् सत्यम् । को नाम शिष्टः ?

धर्मेणाधिगतो यैस्तु वेदस्सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥

इति बोधायनोक्तलक्षणविशिष्ट इति चेत् तर्हि श्रुतिः प्रत्यक्षो

र्माधिगमे हेतुर्येषां ते श्रुतिप्रत्यक्षहेतवः शिष्टा इति चन्द्रिकायां याख्यातत्वाद्वेदविहितानुष्ठायिन एव शिष्टाः । ततश्च पञ्चमा- र्वाङ्निषिद्धो विवाहस्तत ऊर्ध्वं शास्त्रैर्विहितस्तत्र किमाचरन् शिष्ट ति स्वयमेव परामृशतु भवान् । ततः शास्त्रमुल्लंघ्य युक्तिच्छलेन र्मबाधे 'दंभिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत्' इत्युक्तार्थोऽव- शेष्यते । तथा मनुः -

श्रुतिस्तु वेदो विख्यातो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ।।

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ।।

चेताश्च -

अमीमांसा बहिश्शास्त्रा ये चान्ये वेदनिन्दकाः ।
यत्ते ब्रूयुर्नतत्कुर्युर्वेदाद्धर्मो हि निर्बभौ ।।

मीमांसाः- 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । स्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।।' इत्युक्तावापोद्वापरहिता- तप्रतीतार्थमात्रग्राहिणः । बहिश्शास्त्राः - 'यश्शास्त्रविधि- त्सृज्य', 'स्वाभिप्रायकृतं कर्म यत्किंचिद्विधिवर्जितम् ।

क्रीडाकर्मेव बालानां तत्सर्वं स्यान्निरर्थकम्' ।। इत्युक्ताकाराः । अहो मूर्खवादोऽयं लोके चतुर्थीविवाहस्य व्याहतत्वात् । किं विकत्थसे। किमनेन शवमुष्टिन्यायेन गृहीतग्रहणेन ।

'शंकापिहितचारित्रो यस्स्वाभिप्रायमाश्रितः ।
शास्त्रातिगस्स्मृतो मूर्खो धर्मतन्त्रोपरोधनात् ।।'

इति बोधायनोक्तलक्षणो मूर्खः को नामेति विमृश्यतां शास्त्रातिगो वा शास्त्रार्थानुष्ठायी वेति। कुब्राह्मणस्यायं स्वभावः - यदात्मानं महन्निन्दया महाब्राह्मणं करोति । ननु 'चतुर्थीमुद्वहेत्' इति केनचिद्वचनेनापि चतुर्थी विवाहोऽपि विहित इति चेन्न-पदाहवनीयन्यायेन तस्य विधेर्निषेधपरवचनशतबाधितत्वात् । न च वैपरीत्यप्रसंगः - भूयसां वचनानां बलीयस्त्वादर्वाग्विवाहे पातित्यस्मरणाच्च। अत एव च न विकल्पः कल्पते - विजातीय विषयत्वेनास्य चरितार्थत्वाच्च । न चास्य विषयभेदकल्पनं यथाश्रुतार्थग्रहणस्य स्वतः प्राप्तत्वाद्वचनान्तरनैरपेक्ष्येण स्वार्थ-समर्थनस्य युक्तत्वात् । हन्त ते मीमांसावैदग्ध्यं दग्धं संदिग्धं वा न्यायविशेषवचनापर्यालोचनया कस्यचिच्छब्दस्यार्थसमर्थना-नुपपत्तेः । किं सर्वशाखाप्रत्ययन्यायो विस्मृतः? न हि तत्करणं

लोके।

'धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥'

इति हि न्यायविदो विदुः। किञ्च बहुस्मृतिविरोधेन तस्यैव चतुर्थीविवाहवचनस्य त्याज्यत्वम्। तथा व्यासः -

धर्मं यो बाधतेऽधर्मो न स धर्मः प्रकीर्तितः।
अविरोधी तु यो धर्मस्सधर्मस्सद्भिरुच्यते ॥

तस्माद्धर्मविरोधे तु निश्चित्य गुरुलाघवम्।
यतो भूयस्ततो विद्वान् कुर्याद्धर्मविनिर्णयम् ॥

अतो 'यद्येकजाताः' इति वचनात् 'चतुर्थीमुद्वहेत्' इत्यस्य विजातीयविषयत्वमेवावगम्यते। वाक्यान्तरेण पशुजुहूकुशादेरिव विशेषसिद्धे र्न कथमपि तवावकाशलेशः। एवंच यद्यत्पञ्चमा-दर्वाग्विवाहपरं तत्तद्वचनं विजातीयविषयमेवेति व्यवस्थापनीयं दोषज्ञैः। तथैव चतुर्थीविवाहः क्षत्रियादिविषय इति व्यक्तमुक्तवान् संग्रहकारः। 'त्रीन्मातृतः पितृतः पञ्चातीत्य विवाह' इति वचनं क्षत्रियादिविवाहविषयमिति व्याख्येयमित्यखण्डादर्शकारः।

यदपि वसिष्ठोक्तम्- 'पञ्चमीं सप्तमीं वापि मातृतः पितृतस्तथा' इति, यच्चोक्तं 'त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः' इति पैठीनसिवचनं, तदर्वाङ् निषेधपरमेव, न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोध इति विज्ञानेश्वरः। चन्द्रिकायां च -

पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम्।
गृहस्थ उद्वहेत्कन्यां न्यायेन विधिना नृप॥

इति विष्णुपुराणवचनं पञ्चमीमतीत्येति विवृतम्। 'तृतीयात्क्षत्रियो मातुः पञ्चमात्पितृतःपराम्। उद्वहेन्न सजातीयां पञ्चमात्सप्तमा-त्पराम्॥' इत्येतत्कण्ववचनबलात् मातृतस्तृतीयां पितृतः पञ्चमीमिति पैठीनसिवचनं क्षत्रियादिविषयं द्रष्टव्यमिति स्मृतिवरदराजीये। ततश्च 'अवरवयसं भार्यां विन्देत पञ्चमीं मातृ-बन्धुभ्यस्सप्तमीं पितृ बन्धुभ्यः' इत्यादिकमपि एवमेव समर्थ-नीयम्। 'पञ्चमातृतः परिहरेत्सप्तपितृतः', 'त्रीन्मातृतः पञ्चपितृतो वा' इति पैठीनसिनोक्तो विकल्पो मनुवचनानुसारेण। 'पञ्च मातृतस्सप्तपितृतः परिहरेत्' इति सजातीयविषयम्। 'त्रीन्मातृतः पञ्चपितृतः परिहरेत्' इति विजातीय विषयं व्यवस्थाप्यम्। न विकल्पः कल्प्यः - निषेधाद् दोषस्मरणादतुल्यबलत्वाच्च।

अतस्ततोऽर्वाङ्निषेधपरत्वेन वा विजातीयविषयत्वेन वा पञ्चमसप्तमादर्वाचीनोद्वाहपरवचनानां व्यवस्थेति सर्वस्मृतीनामविरोधो द्रष्टव्यः । अतः पक्षद्वये पञ्चमात्सप्तमादूर्ध्वमेव विवाह इति प्रामाणिकानां निष्कण्टकोऽयं घण्टापथः । एवमेवाखण्डादर्शकारस्स्पष्टं व्याचष्ट। 'कूटस्थमन्तराळेऽवस्थाप्य तमादायान्योन्यगणने सति पितृपक्षे सप्तपुरुषानतीत्य या कन्या विवाहेच्छोः पुरुषस्याष्टमी भवति सा विवाह्या; तथा मातृपक्षे च कूटस्थमारभ्यान्योन्यगणने सति पञ्चपुरुषानतीत्य या कन्या विवाहेच्छोः पुरुषस्य षष्ठी भवति सैव विवाह्येति। एवं पञ्चमसप्तमान्तं परिहारो जन्मनाम्नोः परिज्ञाने नान्यथा। यथाह नारदः -

जन्मनाम्नोरविज्ञाने तूद्वहेदविशंकितः ।
मातुस्सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ।। इति ।

तर्हि लोकाचारस्य किं मूलमिति चेद् भ्रान्तिः। विजातीयविषयस्य चतुर्थीमुद्वहेदित्यस्य सजातीयविषयत्वावगमादन्धपरंपरा वा। प्रातीतिकार्थमात्रतृप्तानां पामराणां तु गतानुगतिकत्वमेव न ह्यन्यत्किंचिन्मूलं पश्यामः । यदि कथञ्चित्किञ्चित्क्वचिद्वचनं कृच्छ्लब्धं तथापि -

'मन्वर्थविपरीता तु या स्मृति स्सा न शस्यते' ।

'एकतस्सर्वमुनयो याज्ञवल्क्यस्तथैकतः ।
यदुक्तवान्धर्मशास्त्रं तत्प्रमाणं प्रतीयताम् ॥'

इति मनुयाज्ञवल्क्यादिप्रबलप्रमाणविरोधेन तस्यैव त्याज्यत्वमकामेनाप्यङ्गीकार्यम्। एवं शास्त्रविरोधे लोकाचार एव त्याज्यः । तथा कात्यायनः -

स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् ।
तथैव लौकिकाचारं स्मृतिबाधात्परित्यजेत् ॥

इति ।'शिष्टाचारः स्मृतिर्वेदस्त्रिविधं धर्मलक्षणम्', 'तृतीयं लोकसंग्रहः', 'आचारश्चैव साधूनाम्' इत्यादेर्विषयमाह वसिष्ठः - 'श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणम्' इति । शास्त्रविरोधे लोकाचारो न प्रमाणमिति भावः । तथा गौतमः - 'देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्' इति । शास्त्रार्थ विप्रतिषेधे यत्र यः शिष्टाचारस्स तत्र प्रमाणमित्याह सुमन्तुः -

यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ।
उदितेऽनुदिते चैव होमभेदो यथा भवेत् ॥

तस्मात्कुलक्रमायातमाचारं त्वाचरेद् बुधः ।
स गरीयान्महाबाहो सर्वशास्त्रोदितादपि ॥ इति ।

मनुः -

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति ॥

यथा - 'रात्रिं कुर्यात्त्रिभागां तु' इति वचनार्थप्रकारस्तुण्डीरमण्डले, 'पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः' इति वचनार्थप्रकारश्चोल-मण्डले। ननु तर्हि तद्वदेव चतुर्थीविवाहः क्वचित्, क्वचित्पञ्चमादूर्ध्वं विवाह इति व्यवस्था किं न स्यात्- तदिदं शृणोतु भवान् - न हि विप्रलापः परीक्षकाणां श्रोत्रपद्धतिमध्यास्ते शास्त्रविरुद्धत्वात् । अत्रैकं वक्तव्यं किं सपिण्डा विवाह्या उत नेति - आद्ये नोत्तरं पातित्येनासंभाष्यत्वात्। द्वितीये च नोत्तरम् अविवादादेव। अतः परं न शङ्का न चोत्तरम्। किं च हन्ताष्टौ द्वे चाजानन् स्वैरं चरीकरीतु। कथं वा प्राज्ञो प्रामाणिककोटीमाटीकते। दुराग्रहग्रहग्रहणेन प्रायो बहुविदामपि चित्तं पित्तोपहतवद् बम्भ्रमीतीतिचेत् मैवम् । चन्द्रिकादौ 'असवर्णासु नारीषु विवाहश्च द्विजातिभिः' इति कलावसवर्णाविवाहनिषेधात्, 'स्नात्वा समुद्वहेत्कन्यां सवर्णां

लक्षणान्विताम्' इति सवर्णाविवाहस्यैव विधानात्, सजातीय-विवाहविषये 'गृहस्थस्सदृशीं भार्यां विन्देतोर्ध्वंसप्तमात्पितृ-बन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्', 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति गौतमयाज्ञवल्क्यादिभिः पक्षद्वये पञ्चमात्सप्तमादूर्ध्वमेव विवाहविधानात्, तदर्वाक्पातित्यादि प्रत्यवायस्मरणाच्च सजातीये चतुर्थीविवाहस्य दूरनिरस्तत्वात् तदर्वाग्विवाहो महामूर्खसाहसमेव । ननु लोके पतितं परिहरन्ति नैव चतुर्थीविवोढारमितिचेत् - किमधःपतनेऽपि केशग्रहणेन । किं तावता चतुर्थी विवाहः शास्त्रीयः स्यात् शास्त्रं वाऽन्यथा स्यात् ।

मूर्खस्स्वैरं प्रलपतु शास्त्रोन्मूलं कुयुक्तिभिः ।
शास्त्रमेवानुधावामः प्रमाणशरणा वयम् ।।

तदिदं विद्वांसो विदांकुर्वन्तु । ते हि युक्तायुक्ते न व्यतिविद्रते । न हि सारासारज्ञाः व्यतिविदते । न हि लवणवणिक्कर्पूरमूल्यं जानाति । किञ्च- इदं च किञ्चिदपरं चिन्त्यते । पञ्चमात्सप्तमादर्वाक् सपत्नीमातृबन्धुवर्गः परिहार्यो नवेति । परिहार्यस्सपिण्डत्वात् । ननु- 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः' इत्यत्र -

'मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥

इति दर्शिता बान्धवा इत्युक्तं चन्द्रिकायां, तत्कथं बन्धुशब्दस्य सपिण्डपरत्वम् । मैवम् - 'मृतबन्धोर्दशाहानि कुलस्यान्नं न भुज्यते', 'प्रेतस्य बान्धवा यथा वृद्धमुदकमवतीर्य नोत्कर्षयेयु-रुदकान्ते प्रसिञ्चेयुः' इत्यादिषु बन्धुशब्दवत् 'बन्धुभ्यः पितृ-मातृतः', 'पञ्चमी मातृ बन्धुभ्यः', इत्यादिषु च बन्धुशब्दस्य सपिण्डपरत्वावगतेः, 'असपिण्डा च या मातुः', 'मातुस्सपिण्डा यत्नेन', 'असपिण्डां यवीयसीम्', इति मनुयाज्ञवल्क्यव्यासादि-वचनेषु सपिण्डासपिण्डयोरेव विवाह विधि निषेध दर्शनाच्च एक-शरीरावयवान्वयलक्षणसापिण्ड्याभावेप्यतिदेशेन सापिण्ड्य-सिद्धेश्च । तथा सुमन्तुः - पितृपत्न्यस्सर्वामातरस्तद्भ्रातरो मातुलास्तत्सुतामातुलसुतास्तत्स्वसारश्च मातृष्वसारस्तत्सुता-मातृष्वसृसुतास्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयास्तस्मात्ता नोपयन्तव्याः, अन्यथा संकरकराः स्युः इति । अतो मिथ एषां

निषेधः इत्यखण्डादर्शे पाठान्तरमुक्तम्। स्मर्यते च सापिण्ड्यम् - 'एकत्वं सा गताभर्तुः पिण्डे गोत्रे च सूतके', इति। पत्या सह एकशरीरोत्पादकत्वलक्षणसापिण्ड्यसद्भावाच्च, पुत्रादीनां च सपत्नीमातृसपिण्डभूतपितृशरीरावयवान्वयेन सपिण्डत्वात्, तस्याश्च स्वमातृपितृबन्धुभिःपञ्चमसप्तमावधि सपिण्डत्वाच्च। अत एव हि 'बन्धुभ्यः पितृमातृतः', 'मातृ बन्धुभ्यः पञ्चमात्' 'मातृतःपितृतस्तथा', 'पञ्चमीं मातृ पक्षाच्च' इत्यादिषु सामान्येन मातृशब्दः प्रयुक्तः। न जननी शब्दः। तस्माज्जननीबन्धुवर्ग-वत्सपत्नीमातृयोनिसंबन्धबन्धुवर्गश्च परिहार्य एवेति सिद्धम्। एवं सामान्येन पितृशब्दप्रयोगाज्जनकव्यतिरिक्तपितृकुलमपि सप्तमावधि परिहार्यम्। तथा गौतमः - 'असमानप्रवरै र्विवाह ऊर्ध्वं सप्तमात्पितृ बन्धुभ्यो बीजिनश्च' इति। इदं च नियुक्तबीजविषयम्। अनियोगे तु त्रिपुरुषमेव बीजिपितृसापिण्ड्यम्। 'पृथग्जनाः' इति शंखस्मृतेः। एतच्चोपलक्षणम्। दत्तादीनां द्व्यामुष्यायणत्वेन गोत्रद्वयस्यावश्यपरिहार्यत्वात्। तथा पैठीनसिः -'अथ दत्त-क्रीत- कृत्रिम- पुत्रिकापुत्राः परिग्रहेणार्षेण जातास्ते संहतगोत्रा द्व्यामुष्यायणा भवन्ति' इति। मनुश्च (नवमाध्याये)-

गोत्ररिक्थे जनयितुर्नहरेद्दत्तिमः क्वचित् ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

दत्तग्रहणं पुत्रान्तराणामुपलक्षणमिति व्याख्यातं विज्ञानेश्वरेण । अतः पक्षद्वये पञ्चमसप्तमपुरुषात्परैव कन्या विवाह्येति निरवद्योऽयं निर्णयः। किञ्च-इदञ्च किंचिदपरं प्रपञ्च्यते । मनुः - (तृतीयाध्याये)

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान्कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥

अत्र याज्ञवल्क्यः -

ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥

यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोयुगम् ।
चतुर्दश प्रथमजः पुनात्युत्तरजस्तु षट् ॥
इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ।

सकायः पावयेत्तज्ज्ञः षट्षड्वंश्यान्सहात्मना ।
आसुरो द्रविणादानाद्गान्धर्वस्समयान्मिथः ।।
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ।

इति । अत्र देवलः -

एवं विवाहाश्चत्वारो धर्म्यास्तोयप्रदानकाः ।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् ।।

आर्षे गोमिथुनादानं न शुल्कमित्यर्थः । तर्ह्यासुरो न धर्म्य इति चेन्न- 'चत्वारो धर्म्याः प्रथमाष्षडित्येके' इति गौतमेनासुरस्य च धर्म्य-त्वस्मरणात् । ब्राह्मणस्यायं कथं धर्म इति चेन्न - वैश्यस्यासुर-विवाहविधानात् । अन्यत्पृष्टमन्यदेवोत्तरं दत्तम्-मैवम् । वैश्यवृत्त्या कृष्या जीवतां तद्धर्मस्योचितत्वात् । विप्रस्यापद्धर्म एव कृषिरिति-चेत्-सत्यम् ।

'विवाहास्त्वष्टधा भिन्ना ब्राह्माद्या मुनिसत्तम ।
पूर्वः पूर्वो वरो ज्ञेयः पूर्वाभावे परः परः' ।।

इति नारदेनासुरविवाहस्य चापद्धर्मत्वस्मरणात् । ननु च

क्रीता द्रव्येण या कन्या न सा पत्न्यभिधीयते ।
न सा दैवे च पित्र्ये च दासीं तां काश्यपोऽब्रवीत् ।।

इति शातातपस्मरणात् विप्रस्य कथं धर्म्य इति चेन्न- दासीवत्क्रीतत्वाभावाद् धर्मार्थत्वाच्च द्रव्यदानस्य 'पाणिग्रहणाद्धि सहत्वं कर्मसु' इत्यापस्तंबेन पाणिग्रहणमारभ्यैव विवाहसिद्धाग्निसाध्याग्निहोत्रादिश्रौतस्मार्तकर्माधिकारस्मरणात्, विवाहस्य धर्मार्थत्वावगते:, शिष्टानां विवाहो धर्मप्रजार्थतया धर्म्य एव । 'भिक्षणे निमित्तमाचार्यो विवाह:', 'द्रव्यदानं विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगे च' इत्यापस्तम्बगौतमादिभिर्ज्ञापनाच्च वित्तदानेन विवाहे न क्रयगन्ध: । तस्य प्रजाधर्मार्थत्वात् तदर्थत्वाद् द्रव्यदानस्य श्रुति विहितत्वाच्च । तथाहापस्तंब: - 'दानं क्रयधर्मश्च अपत्यस्य न विद्यते, विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते, तस्माद्दुहितृमतेऽधिरथं शतं देयं तन्मिथुयाकुर्या' दिति । 'तस्यां क्रयशब्दस्संस्तुतिमात्रं धर्माद्धि संबन्ध:' इति । अस्यार्थ:- वाक्य शेषन्यायेन 'न ज्येष्ठं पुत्रं दद्यान्नैकं पुत्रं दद्यात्' इति वसिष्ठस्मरणादत्रापत्यशब्दो ज्येष्ठैकपुत्र विषय: । अतो दत्तपुत्रस्मरणं चाविरुद्धं विषयभेदात् । विक्रये अपत्य शब्द: पुत्रपुत्रीविषय: । 'नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रय:' इति सामान्येन याज्ञवल्क्येन सुतविक्रयस्योपपातकेषु पाठात् 'मनुष्यान् रसान् रागान्

विशेषेण न विक्रीणीयात्' इति मनुष्यमात्रविक्रयनिषेधाच्च । सकृच्छ्रुतस्यापत्यशब्दस्य तन्त्रेणावृत्त्या वा चोदनासूत्रवदर्थद्वय-परत्वमविरुद्धम् । अतोऽन्यस्मै कस्मैचिज्ज्येष्ठैकपुत्रदानं पुत्रपुत्रीविक्रयश्च नास्तीत्यर्थः । तर्हि 'विवाहे दुहितृमते दानं काम्य' मिति दुहितृमते कन्यापित्रादये दानं द्रव्यदानं काम्यं कामनिमित्तम् । स्नातकव्रतविषये यज्ञादिनिमित्तम् । अत एव 'प्रजातन्तुं माव्यवच्छेत्सीः', 'जायमानो ह वै ब्राह्मणस्त्रिभिरृणवा जायते', 'ऋणानि त्रीण्यपाकृत्य,' इत्यादिश्रुतिस्मृतिविहितप्रजासहत्व-कर्मार्थत्वाद्विवाहद्रव्यदानयोः "अयज्ञो वा एष योऽपत्नीकः' इतिश्रुतेः 'पाणिग्रहणादधिगृहमेधिनोर्व्रतम्' इति सपत्नीकस्यैव धर्माधिकारस्मरणाच्च दुहितृमते दानं धर्मार्थमेव न क्रयार्थम्। श्रूयते धर्मार्थदानस्य श्रुतिविहितत्वादित्यर्थः । तामेव श्रुतिमुदाहरति - तस्माद्दुहितृमतेऽधिरथं शतं देयं तन्मिथुया कुर्यात्-इति । तस्मात्धर्मार्थत्वात्, रथेनाधिगतं रथाधिकं वा,गवां शतं देयंदद्यात् । तत्-दुहितृमान् मिथुया कुर्यात् । कोऽर्थः - कन्यायै वराय च क्षेत्रालंकारादिप्रत्यर्पणेन तद्द्रव्यदानसाम्यगत-क्रयप्रसञ्जनं वितथीकुर्यादित्यर्थः । यद्वा मिथुया मिथुनम् ।

'आपोवाग्नेर्मिथुया मिथुनवान् भवति' इति श्रुते: । मिथुयाकुर्यात् - वरदत्तद्रव्यं मिथुनसात्कुर्यादित्यर्थ:। 'मा देवानां मिथुयाकर्भागधेयम्' इति श्रुते: । एवं परदत्त द्रव्यस्य प्रत्यर्पणे सति तस्यां विवाहक्रियायां दुहितरि वा क्रयशब्द: कन्याक्रीतीति लोकवाद: संस्तुतिमात्रम् - अविद्यमानार्थ कथनमेव स्यात् । कुत:? धर्माद्धि संबन्ध: हि यस्माद्धेतो:, दानं न क्रयार्थम्, नापि दासीक्रयवत् दास्यक्रियार्थम्, किंतु धर्मार्थम् । प्रजासहत्व कर्मनिबन्धनोऽयं दम्पत्योस्संबन्ध इति। अतो धर्मार्थत्वादेव हेतोर्यत: पाणिग्रहणं ततो धर्मप्रजासंपत्तये विवाहस्यावश्यकर्तव्यत्वाद्धर्मार्थं दानविधानाच्च 'सर्वाण्युदकपूर्वाणि दानान्यदृष्टार्थानि' इति स्मरणाद् दुहितृमते वर उदकपूर्वमेव द्रव्यं दद्यात्। दुहितृमांश्च कन्यां प्रजासहत्वकर्मभ्य: प्रतिपादयेत्। ततश्च धर्मार्थमेव कन्याप्रतिपादनविधानाद्वरायोदकपूर्वकमेव कन्यां दद्यात्। एवं हि शिष्टा आचरन्ति। युक्तंचैतत् - 'स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया' इति स्थावरविक्रये प्रतिषिद्धे

'भूमिं य: प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
तावुभौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ॥'

इति भूदानप्रशंसादर्शनात् स्थावरविक्रये कर्तव्ये, 'हिरण्योदक-दानेन षड्भिर्गच्छति मेदिनी' इति स्मरणात् हिरण्योदकं दत्त्वा दानरूपेण स्थावर विक्रयं दद्यात्' इति विज्ञानेश्वरोक्तरीत्यात्रापि

'कन्याविक्रयिणो मूर्खाः किल्बिषस्यैव कारकाः ।
पतन्ति नरके घोरे यावदाभूतसंप्लवम् ।।

इति कन्या विक्रयनिषेधात्,

नाग्नि चिन्नरकं याति न कन्यादो न तत्सुतः ।
विश्वजित्संमितो यज्ञः कन्यादानं महाफलम् ।।

इति कन्यादानप्रशंसादर्शनाच्च द्रव्यदानमन्तरेण कन्यानधिगमे वर्णाश्रमधर्मानुष्ठानार्थं विवाहे चावश्यकर्तव्ये सति

'अद्भिरेव द्विजातीनां विवाहस्तु प्रशस्यते ।'
इति स्मरणादुदकपूर्वं द्रव्यदाने कन्यादाने च न क्रयगन्धः ।

अतः केवलं दास्यक्रियार्थं या क्रीतानूढा च या च रत्यर्थमेवोढा तद्विषयमेव 'न सा दैवे च पित्र्ये च' इति वचनमिति निरवद्योऽयं निर्णयः ।अतो न वरस्य क्रयदोषगन्धः । धर्मार्थदानस्य श्रुतिसिद्धत्वादभिसन्धिभेदाच्च । यथा -

'आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनम् ।
वृत्त्यर्थं यस्य चाधीतं स याति नरकान्बहून् ॥'

इत्यादयः प्रतिषिद्धा अप्यभिप्रायभेदेन शिष्टैरनुष्ठिताः श्लाघ्या भवन्ति । किञ्च - 'तन्मिथुया कुर्यात्' इति श्रुतेर्वरदत्तद्रव्य-प्रत्यर्पणाभावे दुहितृमतः पुनरस्त्येव दोषः । तथा मनुः -

न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णञ्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥

नानुशुश्रुम जात्वेतत्पूर्वेष्वपि हि जन्मसु ।
शुल्कसंज्ञेन मूल्येन च्छन्नं दुहितृविक्रयम् ॥

यमोऽपि-

कन्यां तु जीवनार्थाय यः शुल्केन प्रयच्छति ।
उपभुङ्क्ते पुरीषं च मूत्रं तस्याः परत्र च ॥

तथा -

यो मनुष्यान् हि विक्रीय यत्किंचिद्धनमिच्छति ।
तेषां मूत्रं पुरीषं च स परत्रोपजीवति ॥

तथा -

कन्याविक्रयिणो मूर्खाः किल्बिषस्यैव कारकाः ।
पतन्ति नरके धोरे दहन्त्यासप्तमं कुलम् ॥

कन्याभूषणाद्यर्थं द्रव्यादाने न दोषगन्धो दुहितृमतोऽपि । तथा मनुः -

यासामाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणा मानृशंस्यं च केवलम् ॥

आनृशंस्यम् - 'कन्याविक्रयिणो मूर्खाः' इत्याद्युक्तदोषाभावः- इत्यर्थः । अतो वरेण दत्तं कथंचित्प्रत्यर्पणीयमिति सर्वं निरवद्यम् । किञ्च-इदमेकमिह विचार्यते ।

'प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ।
न चैकजातयोःपुंसो रेकजाते तु कन्यके ॥

इति स्मर्यते । तत्र प्रत्युद्वाहादिकं नोपपद्यते, उतोपपद्यत इति । प्रत्युद्वाहनिषेधो न संबोभवीति । 'मनुष्याणां च मनुष्यैः' इत्यापस्तंबेन विनिमयविधानात्, 'नैकस्मै दुहितृद्वयम्' इति च न संजाघटीति 'तस्मादेको द्वे जाये विन्दत' इति श्रुतेः, 'नचैक-जातयोः' इतीदमपि न संजंगमीति विचारासहत्वात् । अत्र

प्रतिविधीयते । प्रत्युद्वाहो नैव करणीयः - अस्मादेव निषेधात् । चिरं न जीवतीति लोकवादाच्च । विनिमयस्मरणं तु दास्यादि विषयमिति व्याख्यातम् । 'मनुष्यान् रसान् रागान् विशेषेण न विक्रीणीयात्' इति विक्रयनिषेधात् कस्यचित् कस्याश्चिद्विवाहे 'पितृपत्न्यस्सर्वामातरः' इति विवोढृदुहितरं प्रति नवोढाया मातृत्वेन कन्याप्रतिग्रहीतुस्तस्या दौहित्रीत्वेन विवाहायोगाच्च । भर्तृसापिण्ड्यं प्राप्ताया स्सपत्नीदुहितृसापिण्ड्यसिद्धेस्सपिण्डा-विवाहसंभव एव । अत एव विवोढृ कन्याया स्स्वस्रीयात्वेन च स्यालस्य च विवाहो नोपपद्यते । अतो 'मातुश्च योनिसंबन्धेभ्यः' इति निषेधोऽत्रापि समानः । "मातुःपितुरितियोनिसंबन्धे' इति पातित्यहेतुस्मरणात् । एकस्मै दुहितृद्वयदानं च न योयुज्यते -

सखिभार्यां समारुह्य स्वस्रीयां स्यालिमेव च ।
अहोरात्रोषितो भूत्वा तप्तकृच्छ्रं समाचरेत् ।।

इति प्रायश्चित्तस्मरणात् । तच्च सकृद्गमने । गमनाभ्यासे तु 'निन्दित कर्माभ्यासी' इति गौतमेन पातित्य स्मरणात् । न च स्यालीगमन निषेधस्तदुद्वाहे, अनूढागमने स इति चेन्न - तदुद्वाहेऽपि स्यालीत्वा-नपायात् जायाद्वयमात्रप्राप्तिपरत्वाच्च श्रुतेः । न तु ज्येष्ठा कनिष्ठा

द्वयविवाहप्राप्तिपरत्वं तस्याः अतो न विरोधः। उत्तरार्धमपि न संपनीपद्यते - विचारासहत्वादेव। 'पितृपत्न्यस्सर्वामातरः' इति-वत् 'श्वश्रूःपूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः।' इतिज्येष्ठभ्रातृ-पत्न्या मातृत्वातिदेशात् तस्यास्स्वसुर्मातृष्वसृतुल्यत्वेन तस्या विवाहः कनिष्ठस्य नोपपद्यते । स्वसपिण्डभूतज्येष्ठभार्यासन्न - बन्धुत्वेन 'आसन्नबन्धूद्वाहश्च न शोभनकरश्चिरम्' इत्यासन्न बन्धूद्वाहस्य चिरजीवित्वाभावस्मरणात् । 'मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत्' इति मातृभ्रातुः कन्याविवाहे प्रायश्चितस्मरणाच्च। गमनाभ्यासे यमः -

स्नुषां मातृष्वसां मातृसखीं मातृष्वसुस्सुताम् ।
मातुलानीं तथा श्वश्रूं गत्वा सद्यः पतेद् द्विजः ।। इति ।

अत्राप्यतिदेशप्राप्तमातृत्वादि प्राप्त्यर्थमेव जनन्यादिशब्दाप्रयोगः। एवमन्यत्रापि सामान्यशब्दप्रयोगे द्रष्टव्यम्। किञ्च पूर्वमेव पुत्रस्य कस्याश्चिद्विवाहे कृते पश्चात्पितुरावर्तनेन स्नुषायास्स्वसृ मातृष्वसृ पितृष्वसृ तत्सुता विवाहे शास्त्रविरोधाभावेऽपि प्रतीतिविरोधात् लोकविद्विष्टत्वा 'न्नशोभनकरश्चिरम्' इति स्मरणाच्च तद्वर्जनमेव-युक्तम्। किञ्च यस्या विवाहे कृते तस्या बन्धुषु विवोढुः स्वसृत्व

मातृत्वस्वस्त्रीयत्वादिसंभवे सति -

‘सखी भार्या कुमारीषु स्वयोनिष्वन्त्यजासु च।’
‘रेत: सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च’
‘पितु:स्वसारं मातुश्च मातुलानीं स्नुषामपि’

‘मातु:सपत्नीं भगिनीमाचार्यतनयां तथा।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पग: ॥’

‘मातृगमनं दुहितृगमनं स्नुषागमनमित्येतान्यतिपातकानि’ इति विष्ण्वादिना दोषस्मरणात्साक्षाद्वा परम्परया वा अतिदेशाद्वा तादृशी नोद्वाह्येति संग्रह:। एवमियद्धा पुनरद्धा निर्धारितं श्रद्धा-जाड्यादिमं निश्चयं विपश्चिदपश्चिमा विमृशन्तु।

प्रामाणिकोऽस्तीति विवाहनिष्ठां पर्यच्छिनद्वैदिकसार्वभौम:।
निर्मत्सरा: पश्यत साधवस्तां किं हैतुकै: पण्डितमानिभिस्तै:॥

## प्राग्दत्तकन्या प्रत्यानयन विचारः

इदमिहापरं निर्णीयते । वाचाद्भिर्वा दत्ता कन्यान्यस्य विवाहार्हा नार्हा वेति। 'दत्तां गुप्तां वर्जयेत्' इत्यापस्तंबस्मरणादनर्हेति चेन्न - गुणवद्वरदत्ताविषयत्वात्तस्य । तथा नारद :-

दत्त्वा न्यायेन यः कन्यां वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥

याज्ञवल्क्यः -

सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ।
दत्तामपि हरेत्पूर्वा च्छ्रेयांश्चेद्वर आव्रजेत् ॥

अत्र विज्ञानेश्वरः - 'सकृदेव कन्या प्रदीयते' इति शास्त्रनियमः । अतस्तां दत्त्वा अपहरन्कन्यां चोरवद् दण्ड्यः । एवं सर्वत्र निषेधे प्राप्तेऽपवादमाह 'दत्ता' मिति । यदि पूर्वस्माद्वरात् श्रेयान् विद्या - भिजनाद्यतिशययुक्तो वर आगच्छति पूर्वस्य च पातकादियोगो दुर्वृत्तत्वं वा तदा दत्तामपि हरेत् । एतच्च सप्तमपदादर्वाग्द्रष्टव्यम् इति। गौतमश्च - 'प्रतिश्रुत्याप्यधर्म संयुक्ताय न दद्यात्' । नारदश्च -

नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषस्स्या दन्योन्यं त्यजतोर्द्वयोः ॥

दीर्घकुत्सितरोगार्ता न्यंगा संस्पृष्टमैथुना ।
दुष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः ।।

कात्यायनश्च -

उन्मत्तः पतितः कुष्ठी तथा षण्डस्सगोत्रजः ।
चक्षुःश्रोत्रविहीनश्च तथापस्मारदूषितः ।।
वरदोषास्स्मृता ह्येते कन्यादोषाश्च कीर्तिताः ।

एत एव कन्यादोषा इत्यर्थः । स एव -

स तु यद्यन्यजातीयः पतितः क्लीब एव वा ।
विकर्मस्थस्सगोत्रो वा दासो दीर्घामयोऽपि वा ।।
ऊढापि देया सान्यस्मै सप्रावरणभूषणा ।।

ऊढा- वाचाद्भिर्वा दत्ता । पाणिगृहीतायाः पुनरुद्वाहस्य कलौ निषेधात् । यद्वा - ऊढापि देया किल किमुत दत्तेति, दत्ताया अन्यस्मै दानं कैमुत्यसिद्धम् । अतो दोषो न प्रच्छाद्यः-

अनाख्यायाददद्दोषं दण्ड्य उत्तमसाहसम् ।
अदुष्टां तु त्यजन्दण्ड्यो दूषयंस्तु मृषाशतम् ।।

इति दण्डस्मरणात् । उत्तमसाहसम् - साशीति पण साहस्रम् । विवाहात्प्रागेव द्वेषादिना अविद्यमानैः कन्यादोषैर्दूषयन्नपि तथा

दण्ड्यः । अत्र स्मृतिचन्द्रिकायां च - 'एवं च वाग्दानप्रभृति सप्तम पदादर्वाग्दोषदर्शने मरणादौ वा कन्यामन्यस्मै दद्यान्नोर्ध्वम्' इत्युक्तं भवति । तथा वसिष्ठ :-

अद्भिर्वाचा च दत्ताया म्रियेतातो वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥

कात्यायनश्च -

वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदि ।
रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेद्वरम् ॥

प्रणश्येत् - देशान्तरं गच्छेत् । रक्तागमः - रजः प्रादुर्भावः ।

तथा नारदः -

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं गतः ।
त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम् ॥

वरनाशाभावेऽपीत्यर्थः । प्रतिगृह्य - सर्वथा तवैव दास्यामीति निश्चयहस्तमंगीकृत्येत्यर्थः । उदकपूर्वक प्रतिग्रहे तु वरस्य दोषाभावेऽन्यस्मै पुनर्दानायोगात् । इदं च पूर्वोक्तवरदोषसंभवे ।

अत्र मनुः -

अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

पितरि तावददातरि स्वयं कन्या भर्तारं वरयेत्तदा कन्यावरयो दोषः । पितुरतिक्रमदोषो नास्तीत्यर्थः । एवं सप्तमपदादर्वाग्दोषदर्शनेऽन्यस्मै दानं शास्त्रसिद्धम् । अत्र बृहस्पतिः -

त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

यत्तु

'त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादश वार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥'

इतिमनुवचनम् - तद्विवोढृनियमपरम् ।
'वर्षैरेकगुणां भार्यामुद्वहेत् त्रिगुणः स्वयम्' इति विष्णुपुराणे दर्शनात् । यत्पुनर्यमवचनं -

'प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥

इति तत्खलु ।

रोमकाले तु संप्राप्ते सोमो भुङ्क्ते तु कन्यकाम्।
रजः काले तु गन्धर्वो वह्निस्तु कुचदर्शने ॥

इतिवद् द्वादशे वर्षे प्राप्ते गौर्याद्यवस्थास्वदत्तायाः शोणितं पिता भुङ्क्त इत्यर्थपरम्। यदप्यपरम् -

कन्या तु द्वादशे वर्षे या न दत्ता गृहे वसेत्।
भ्रूणहत्या पितु स्तस्या स्सा कन्या वरयेत्स्वयम् ॥

इति तदपि या कन्या दशवार्षिकी न दत्ता तस्या द्वादशे वर्षे कतिचिद्दिनान्यपि पितृगृहवासे पितुः भ्रूणहत्या स्यात् इत्येवमर्थं प्रतिपादयति। अतः कन्यादाने कालावधित्वभ्रमो न कार्यः। दशाब्दात्परं रजस्वलात्वेन च वृषलीत्वेन च तद्विवाहे पित्रादीनां विवोढुश्च प्रत्यवायस्मृतेः। तथा यम एव -

अष्टवर्षा भवे द्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

बृहस्पतिः -

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥

माता चैव पिता चैव ज्येष्ठ भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपांक्तेयः स विप्रो वृषलीपतिः ॥

वृषलीसंग्रहीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

संवर्तः-

अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

श्रीधरीये च -

एकादशाब्दादारभ्य सर्तुर्नामाबला भवेत् ।
ततस्तु वृषली सा स्यात्सास्रा योनिर्यदि स्त्रियाः ॥
तद्भर्ता वृषलीनाथो गर्हितस्सर्वकर्मसु ।

सास्रा द्रविता । अत्र वृषली द्विविधा । रजस्वला काचित् । काचिद् दृष्टरजस्का । तथा चन्द्रिकायाम्-

पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्या स्सा कन्या वृषली स्मृता ॥

नारदः -

यावन्तश्चर्तवस्तस्या स्समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्यास्स्युस्तस्य यो न ददाति ताम् ॥

विज्ञानेश्वरश्च -

'चण्डाली वर्धकी वेश्या रजस्था या च कन्यका ।
ऊढा च या सगोत्रेण वृषल्यः पञ्च कीर्तिताः ॥

अत्र प्रादुर्भूतरजस्काया वृषल्याः सगोत्रोढासमभिव्याहरणं विवोढुस्समानगोत्राविवाहगमनगर्भोत्पादनेषूक्तप्रायश्चित्तप्राप्त्यर्थम् । यथा हि विज्ञानेश्वरेण -

'रेतस्सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च ।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥'

अन्त्यजाश्चात्र -

'चण्डालश्श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥'

इति मध्यमांगिरोदर्शिता द्रष्टव्याः । न तु 'रजकश्चर्मकारश्च' इत्यादिप्रतिपादिताः । तेषु लघुप्रायश्चित्तस्योक्तत्वात् । तथा -

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ।।

इति चण्डालादिसाम्यं प्रतिपादयता मनुनापि कामतोऽत्यन्ताभ्या मरणान्तिकं दर्शितम् । तथा ह्यज्ञानतश्चण्डालीगमनाभ्यासे पतति अतः पतितप्रायश्चित्तं द्वादशवार्षिकं कुर्यात्, इति व्याख्या 'स्वयोनिष्वन्त्यजासु च' इति एकवाक्यसमभिव्याहारा भगिन्यादिष्वपीयमेव व्यवस्था वेदितव्येति व्यवस्थापितम् वृषलीविषये यमः -

ब्राह्मणो वृषलीं गत्वा त्रियहं सूतकी भवेत् ।
तथास्यां गर्भमाधत्ते ब्राह्मण्यादेव हीयते ।।

अत्र मनुः -

यः करोत्येकरात्रेण वृषळीसेवनं द्विजः ।
तद्भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ।।

वृषल्यत्र चण्डाली । तद्विषयमिति व्याख्यातं विज्ञानेश्वरेण चतुर्विंशतिमते-

वृषल्यामभिजातस्तु त्रीणि वर्षाणि संयतः ।
चतुर्थकालसंप्राप्तं नक्तं भुञ्जीत वाग्यतः ।

इदं शूद्रादिविषयमिति व्याख्यातम् । अत इदं शूद्रजातीयवर्धकी वेश्या विषयं 'हीनयोनिनिषेवणम्' इत्यत्र तथा व्याख्यातत्वात्, शूद्रत्वाविशेषात्,

'यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणस्सेवमानः ।
चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ।।

इत्यापस्तंबवचनेन समानार्थत्वाच्च । मनुः-

वृषलीफेनपीतस्य निश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृति र्न विधीयते ।।

इत्यादिवचनजातं चन्द्रिकायां वृषलीत्वाविशेषात् प्रादुर्भूत-रजस्कारजस्वलोभयविषयत्वेनोदाहृतम् । अत्रायं विवेकः - वृषली शब्दस्य शूद्राविषयत्वे 'ब्राह्मण्यादेव हीयते', 'निष्कृति र्न विधीयत' इति स्मरणमत्यन्ताभ्यास विषयम् । तथा विज्ञानेश्वरीये- 'शूद्रागमनं साधारणस्त्रीसंभोगश्च हीनयोनिनिषेवणम् । तत्र यत्तु यमेन साधारणस्त्रीगमनमधिकृत्य गुरुतल्पगमनव्रतमुक्तं-

'गुरुतल्पव्रतं केचित्केचिच्चान्द्रायणव्रतम् ।
गोघ्नस्येच्छन्ति केचिच्च केचिद्यदवकीर्णिनः ।।

इति - तच्च जन्म प्रभृति सानुबन्धाविच्छिन्नाभ्यासविषयम् इति अत्रेयं व्यवस्था- 'पशुवेश्याभिगमने प्राजापत्यं विधीयते' इत्यकामविषयम्। कामतस्तु -

वेश्यागमनजं पापं व्यपोहन्ति द्विजातयः।
पीत्वा सकृत्सकृत्तप्तं सप्तरात्रं कुशोदकम्॥

इति यमेनोक्तम्। तत्राभ्यासापेक्षया चान्द्रायणादिकं व्यवस्थाव्यम्। गर्भोत्पादे तु वर्षत्रयम्। अनुत्पादेऽपि कामतोऽत्यन्ताविच्छिन्न बहुकालाभ्यासे गुरुतल्पव्रतमित्येवमेकवाक्योपात्तत्वात्

'बहूनामेकधर्माणा मेकस्यापि यदुच्यते।
सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृताः॥'

इति वचनाच्च प्रादुर्भूत रजस्काया वृषल्या भर्तुश्च द्रष्टव्यम्। सामान्येन वृषली वचनेषु विशेषानुक्तेश्च चण्डालीसगोत्रादिषु च 'चण्डाल्यां गर्भमाधाय गुरुतल्पव्रतं चरेत्', 'गुरुतल्पी सविज्ञेयः सगोत्राञ्चैवमुद्वहन्' इति प्रायश्चित्ततौल्यदर्शनाच्च तत्सहपठितायाः कन्यायाश्च गमनादौ इदमेव प्रायश्चित्तं द्रष्टव्यम्। तस्याश्च वृषळीत्वात्। रजस्वलागमनादौ तु 'असंभाष्यो ह्यपाङ्क्तेयः स

विप्रो वृषलीपतिः', 'तत्पतिर्वृषलीनाथो गर्हितस्सर्वकर्मसु' इत्यादिभिर्व्यक्तमेवोक्तं द्रष्टव्यम्। अस्या वृषलीत्वेपि 'रजस्स्था या च कन्यका' 'रजः पश्यत्यसंस्कृता' इत्यादि विशेषोक्ते र्न तद्विषये गुरुतल्पव्रतादि प्रसंग इति। अत्र मनुः -

कामममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि।
न त्वेवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥

इदं गुणवद्वरसंभवदानविषयम्। बोधायनः-

दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणे।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्॥

मनुः-

पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिस्सप्तमे पदे॥

निष्ठा- परमावधिः। कन्या वरयो र्दोषदर्शनेऽपि सप्तमपदादूर्ध्वं न परित्याग इत्यर्थः। अत्र यमः -

नोदकेन न वाचा वा कन्यायाः पति रुच्यते।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे॥

ततश्च -

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ।
व्याधितां विप्रदुष्टां वा च्छद्मना चोपपादिताम् ॥

इत्यादिकमपि सप्तमपदादर्वागेवेति व्यवस्थापनीयम् । अत्र वसिष्ठ व्यक्तमाह -

(‘स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग्विधीयते ।
वरणाद् ग्रहणं पाणेस्संस्कारोऽपि विलक्षण: ॥
तयोरनियतं प्राहुर्वरणं दोषदर्शनात् ॥’)

पाणिग्रहणात्प्राग्दोषदर्शनाद्धेतोर्वरणमनियतमित्यर्थ: । अत: -

‘दत्ताया: पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥’

इति निषेधो गुणवद्वरदानविषय: । प्रदुष्टविविधदोषदर्शने छलदाने च त्यागस्मृते: । अपात्रे छलादिना पात्रे च दत्तस्यापि ‘अदत्तं दोष दर्शनात्’ इति अदत्तत्वस्मरणात् ‘यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्’ इति सोपधिकदानादेर्निवृत्तिस्मरणाच्च ।

उक्तदोषाभावे मनु: -

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥

न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः ।
दत्त्वा पुनः प्रयच्छेच्चेत् प्राप्नोति पुरुषानृतम् ॥

'पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥'

इत्युक्तदोषमाप्नोतीत्यर्थः । कात्यायनः -

सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमंगळा ।
उदकस्पर्शिता या च या च पाणिगृहीतिका ॥

अग्निं परिगताया च पुनर्भूप्रसवा च या ।
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

वाचाद्भिर्वा दाने निश्चयताम्बूले वा कृतेऽन्यस्मै कन्यादानं गर्हितम् ।
अत्र मनुः -

एतत्तु न परे चक्रुर्नापरे जातु साधवः ।
यदन्यस्य प्रतिश्रुत्य यदन्यस्य प्रदीयते ॥

बोधायनः- 'वाग्दत्ता मनोदत्ता अग्निं परिगता सप्तम पदं नीता भुक्ता

गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न ध विन्देत' इति। गुणवद्वरायोदकपूर्वकदाने मनुः-

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥

'देवरान्न सुतोत्पत्ति र्दत्ता कन्या न दीयते'

इति कलौ निषेधाद् भर्तृनाशादिषु न देवरनियोजन मित्यर्थः सर्वप्रकारेणानन्यपूर्विकैव विवाह्येति धर्मशास्त्ररहस्यम्। अत्र मनुः-

उत्तमैरुत्तमैस्सार्धं संबन्धानाचरेद्बुधः।
निनीषुः कुलमुत्कर्षमवमानसमांस्त्यजेत्॥

इति निश्चेतव्यं निश्चितम्। पश्चाद्विपश्चिदपश्चिमानां निर्मत्सराणां सन्तोषायेदमपरं [redacted]ार्य निर्धार्यते। अत्र मनुः-

पैतृष्वसेयां भगिनीं स्वस्रीयां मातुरेव च।
मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत्॥

एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान्।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः॥

व्यासश्च -

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥

पुराणे च -

यो मे त्वं हृदयाज्जातो वयस्त्वं न प्रयच्छसि ।
पापान्मातुलसंबन्धात्प्रजा वै ते भविष्यति ॥

शातातपश्च -

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् ॥

उद्वहेत सगोत्रां यस्तनयां मातुलस्य च ।
ऋषिभिश्चैव तुल्यां च स तु चान्द्रायणं चरेत् ॥

एवं तृतीयाविवाहमात्रे सकृद्गमनमात्रे च चान्द्रायणमुक्तम्। गमनाभ्यासे तु 'ब्रह्महसुरापगुरुतल्पगमातापितृयोनिसंबन्धागस्तेननास्तिकनिन्दितकर्माभ्यासि' इति गौतमेन पातित्यमुक्तम् । अत्र ब्रह्महादिभिस्सहपाठेऽपि स्तेयादिकं प्रायश्चित्तापनोद्यं तदेकविषयं च । मातृपितृयोनिसंबन्धागमने पुनरभ्यस्ते 'पतितोत्पन्नः पतितो भवति' इति वसिष्ठस्मरणात्पुत्रोत्पादे

पुत्रपरम्परया द्विजातिकर्महानिरेव। अत्र शातातपः-

समान प्रवरां कन्यामेकगोत्रामथापि वा।
विवाहयति यो मूढ स्तस्य वक्ष्यामि निष्कृतिम्॥

उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत्।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यात्प्रच्युतो भवेत्॥

अत्र सगोत्रसमानप्रवरयोरुक्तं प्रायश्चित्तादिकं सपिण्डादि विषयेऽपि तुल्यम्। 'असपिण्डामसगोत्रामसमानार्षेयाम्' इति सहपठितानामेकोक्तस्य सर्वेषां तुल्यत्वात्। तथा विज्ञानेश्वरीये-

बहूनामेकधर्माणामेकस्यापि यदुच्यते।
सर्वेषां तद्भवेत्कार्य मेकरूपा हि ते स्मृताः॥ इति।

सपिण्डामुद्वाह्य गमनाभ्यासे -

रेतस्सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते॥

इत्युक्तमधिकम्। अतस्तृतीया विवाहस्त्याज्यः। 'ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः।' इति मनुस्मरणात्। अत्रोपयन्तुरेव पातित्यस्मरणात् सांकर्याभावे कन्याप्रदस्य तदन्येषां च न

दोषगन्धः । मातुलसुतोद्वाहनिषेधो गान्धर्वोद्वाहविषय इति चेन्न-क्वचिदपि तथा विषयभेदाप्रतीतेस्तथावचनाभावाच्च । व्यवस्थापकवचनाभावेऽपि तथाकल्पनेऽति प्रसंगात् 'गुरुतल्पी सविज्ञेयः पतिताः शूद्रतां गताः' इत्यादीनामपि तद्विषयत्वप्रसक्तेः । असति विशेषोपस्थापके सामान्यस्य संकोचो न युक्त इतिचेत्तुल्यमत्रापि । अन्यथा - 'उद्वहेत सगोत्रां यस्तनयां मातुलस्य च । ऋषिभिश्चैव तुल्यां च' इति सहोपात्तत्वेन् सगोत्रासमानार्षाविवाहनिषेधस्यापि गान्धर्वविवाह-विषयत्वप्रसक्तेः । किञ्च गान्धर्वविवाहविषयत्वे ब्राह्मादि विवाहेऽपि सपिण्डत्वानपायात् प्रत्यवायः पुनरवर्जनीयः। 'ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः'- अथ पतनीयानीति प्रक्रान्तपतनहेतुषु मातुः पितुरिति योनिसंबन्धे सहापत्ये स्त्रीगमन-मिति तृतीयोद्वाहस्य पातित्यहेतुत्वस्मृतेः । ननु चन्द्रिकायां सायणीये च मातुलसुतापरिणयनमुक्तमितिचेत् सत्यमुक्तम् - दुरुक्तं तत्- न तद्दुरुक्तम् ।

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
विवाहयेन्मनुः प्राह पाराशर्यो यमोंगिराः ॥

इति वचनोदाहरणादिति चेन्मैवम् । द्विचन्द्रभेदवद्भेदमिथ्यात्व साधकस्य भेदत्वस्य शुक्तिरजताभेदवदभेदमिथ्यात्व साधकेनाभेदत्वेनेव 'तृतीयां मातृतः कन्यां तृतीयां पितृत स्तथा विवाहयति यो मूढः', 'उद्वहेत सगोत्रां यस्तनयां मातुलस्य च' 'मातुलस्य सुतामूढ्वा' इत्यादि प्रबलप्रमाणैस्सत्प्रतिपक्षत्वे साध्यासाधकत्वात् 'द्वैधे बहूनां वचनम्', 'यतो भूयस्ततो विद्वा कुर्याद्धर्म विनिर्णयम्', 'भूयसां स्याद्बलीयस्त्वम्', 'बहूनामनुग्रहं न्याय्यः' इत्यादिवचनन्यायैस्तस्यैव बाधाच्च । किञ्च यथ विज्ञानेश्वरेण पितृविषये पार्वणपरानेकवचनसंकोचदोषभयेन एकोद्दिष्टपरवचनमेव निरस्तम् तद्वदत्रापि पञ्चमसप्तमाधोविवाह-निषेधपरपूर्वोदाहृत मनुयाज्ञवल्क्यापस्तंब बोधायनगौतम पराशर व्यासविष्णुनारद पैठीनसि शातातपादि वचन निचयस्य संकोच-प्रसंगाद्विरोधात्प्राबल्याच्च तृतीयाविवाहवचनमेव निरस्यं न्यायविद्भिः । पातित्यप्रसक्तेः । अत एव भट्टाचार्यैर्मातुलसुता विवाहो गर्हितः ।

(गर्हित इत्येतदुत्तरम् – 'किञ्च सवर्णस्य सपत्नीपुत्रस्य कथंचिदन्यत्र कन्याया अलाभे 'ऊर्ध्वं सप्तम्या अप्यलाभे सप्तमीमुद्वहेत्'

इत्यापस्तंबोक्तसप्तमीविवाहवदसवर्णपुत्रस्यापद्विषयमेव तृतीया-विवाहपरं वचनमिति युक्तम् । सर्वत्रातिदेश्यादतिदिष्टस्यैव वैषम्यदृष्टेः 'पितृपत्न्यस्सर्वा मातरः' इत्यतिदिष्टं मातृत्वं सपत्नीपुत्रस्य सापिण्ड्यावधिभूततृतीयाविवाहस्योभयत्र तुल्यत्वान्न चोद्यावकाशः' इत्यधिकं क्वचित्कोशे दृश्यते ।)

एवमेव-

मातृष्वसृसुतां केचिन्मातुलस्य सुतामपि ।
विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम् ॥

इति वचनं च विजातीयविषयमेव समर्थनीयं विशेषज्ञैः । सर्व-त्रापदुपाधित्वात्संकोचस्य । लोके द्रामिडेतरेषु तृतीयाविवाहो महाप्रवाहो वरीवृतीतीतिचेत् किं तेन । न हि तावता शास्त्रप्रामाण्यं गतम् । अशास्त्रीयानुष्ठानेऽनुष्ठातैवोपहतस्स्यात् । शास्त्रवज्जाति-धर्मश्च प्रमाणमिति चेन्न - शास्त्राविरुद्धस्यैव तस्य प्रामाण्यात् । तथा गौतमः - 'देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्' इति । अन्यथातिप्रसंगात् । तथापि जात्याचारे यदि निर्बन्धः - न तावता शास्त्रस्य वान्यस्य वा हानिः । अपि तु शास्त्रातिवर्तिन एव । नह्यन्यकृत्यमन्योऽनुभुङ्क्ते । 'यतस्स्वकृतभुक्पुमान्' इति

स्मृतेः।

वेदशास्त्रं मृषा येषां तेषां युक्तं तदत्ययः ।
तन्नस्सत्यं हि तन्निष्ठा वरिष्ठा वैदिका वयम् ॥

न हि शास्त्रोल्लंघनं साधीयः ।

यः शास्त्र विधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥

इति गीतत्वात् । अतश्शास्त्राविरुद्ध एव देशाद्याचारः प्रमाणम अत एव शास्त्रविहितस्यैव देशाद्याचारस्य अविचाल्यत्वम देवलः -

'यस्मिन्देशे पुरे ग्रामे त्रैविद्यनगरेऽपि वा ।
यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत् ॥'

स्मृतिद्वैधे तत्तद्देशाचारानुसारेण धर्मः कल्प्य इत्यर्थः । किञ्च -

'न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥'

इत्याद्युक्तमांसभक्षणादिषु इच्छायां विवाह-यज्ञ-सुराग्रहैं (महेष्विव) व्यवस्थापनमेव शिष्टाचारो न तु स्वेच्छाचार

'गर्भाष्टमेऽष्टमेवाब्दे', 'एकाग्ने स्त्रिविधम्' समारोपणमात्मन्यरण्योर्वा समित्सु पञ्चसप्त त्रयोऽपिवा' इत्यादिकवैकल्पिकधर्मेष्वात्मनस्तुष्टिश्शिष्टाचारो वा प्रमाणम्। 'उत्तरांशः प्रभाते तु', 'पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः', 'देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक्', 'गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जनात्' इत्यादिषु देशाचारो वक्तुं युक्तः। याजनाध्यापन प्रतिग्रह शस्त्रास्त्रभृत्त्व युद्ध प्रजापालन कृषि गोरक्ष वाणिज्य विप्रशुश्रूषा शिल्पजीवनादिको हि जातिधर्मः प्रसिद्धः। एतद्विषयमेव 'सहजं कर्म कौन्तेय स दोषमपि न त्यजेत्' इति गीतम्। एवं हि धर्मशास्त्रप्रवीणा विज्ञानेश्वरादयो व्यवस्थापयामासुः 'यथर्षिशिखा निदधाति यथैवैषां कुलधर्मस्स्याद्दक्षिणतः कुमुजा वसिष्ठानामुभयतः शिखा काश्यपानां मुण्डा भृगवः पञ्चचूडा आंगीरसा वाजमेके मंगळार्थं शिखिनोऽन्ये यथा कुलधर्मं च' इत्यापस्तंबलोकाक्षि प्रमुख मुनिमुख मुखरित धर्मेषु कुलाचार इति वक्तुमुचितम्। कुमुजा-शिखा। वाजः - केशपङ्क्तिः। अतः शास्त्रनिषिद्धोऽर्थो देशजातिकुलाचारो न भवति, 'शास्त्रविप्रतिषेधे तु यस्सद्भिरनुष्ठितस्स एव लोकाचारः शिष्टाचारश्चे'ति तत्त्व-

स्थिति: । किञ्च -

उद्वाह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे स्तेयरताः शिल्पिनश्च गवाशिनः ॥

मत्स्यादाश्च नरास्सर्वे व्यभिचाररतास्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥

अप्रजातां प्रगृह्णन्ति भ्रातृभार्यामभर्तृकाम् ।
विरुद्धास्तु प्रदृश्यन्ते दाक्षिणात्येषु भूयशः ॥

इति सायणीय एव विवाहप्रकरणे तत्तद्देशाचारपरिगणनायां सहपठितत्वेन मातुलसुताविवाहस्यानाचारत्वं सुव्यक्तम्, अन्यथा तत्सहपठितत्वात् मद्यपानव्यभिचारादीनामपि आचारत्वप्रसंगात् । तत्तद्देशे स आचार इति चेन्न - तस्य तस्य विनिवर्त्यत्वस्मरणात् । तथा तत्रैव-

मातुलस्य सुतोद्वाहो मातृबन्धुत्वदूषणम् ।
[1]कुले कन्याप्रदानं च देशेष्वन्येषु दृश्यते ॥

एवं विरुद्धानाचारान्प्रयत्नेन निवर्तयेत् ।
देशजात्यादि धर्मस्य प्रमाणेन विरोधिनः ॥

1. कुले → शुल्के (पा)

'शास्त्रेणातो नृपस्सर्वं शास्त्रदृष्ट्या प्रवर्तयेत् '। इत्यत्रानादरे षष्ठी। प्रमाणविरुद्धान्देशजात्यादि धर्माननादृत्येत्यर्थः। अत्र धर्म-शब्दो गर्हाविरहमात्र निबन्धनः। अन्यथा- 'एवं विरुद्धानाचारान् प्रमाणेन विरोधिनः' इति दुर्वचत्वात् । अत्रापस्तंबः- 'एतेन देशकुलधर्मा व्याख्याताः' इति। इदं च व्याख्यातं हरदत्तेन। 'ज्येष्ठो दायाद इत्येके' इत्यादिकं शास्त्रविप्रतिषेधादप्रमाण-मित्युक्तम्। एतेन शास्त्रविरुद्धस्याप्रमाणत्वव्याख्यानेन शास्त्र-विप्रतिषिद्धा मातुलसुतापरिणयादयोऽप्रमाणमिति । अतः तृतीयोद्वाहस्त्याज्य एव 'अधर्माणां तु सततमाचारः पतनहेतुः' इति स्मृतेः। एवमापञ्चमादासप्तमाच्च विवाहो न कार्यः। तस्य पतनहेतुत्वात् - 'गुरुतल्पी स विज्ञेयः' इत्यादि स्मृतेः। एतत्सर्वं महाग्रहावग्रहगृहीतेभ्यो न रोचते। अथापि निर्मत्सरः प्रमाण-परतन्त्रः कश्चिद्विपश्चिदस्तीति व्यवतिष्ठामहे स्म। किञ्च - 'स्त्रीसन्ततिस्तथा पुंसाम्', 'आपञ्चमात्सप्तमाच्च', 'पञ्चमात् सप्तमाद्धीनाम्','पञ्चमे सप्तमे चैव' इत्यादीनि पञ्चमात् सप्तमादर्वाग्विवाहे पातित्यपराणि वचनानि यः खलूदाजहार स एव हि मातुलसुताविवाहमातिष्ठेत ! एवं पूर्वापरविरुद्धमनुन्मत्तः

को ब्रवीति तद्वचनजातं स्वेनैवोदाहृतं - नूनं तेन विस्मृतम् । मातुलसुताविवाहनिषेधस्य गान्धर्वविवाह विषयत्व कल्पने मातुलसुतया सहपठित सगोत्रासपिण्डाविवाहनिषेधस्यापि तद्विषयत्वकल्पन प्रसक्त्या तत्कल्पनस्य निरस्तत्वात् । किञ्च - 'विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरो यमः' इति वंचनमसंगतमेव विचारासहत्वात् । तथाहि - 'असपिण्डा तु या मातुः', 'एतास्तिस्रस्तु भार्यार्थे' इति वदन्मनुः कथंकारं तृतीयाविवाहं वदेत् । यदिवदेदुन्मत्तप्रलपितं स्यात् । 'यद्वै किंचन मनुरवदत्त-द्भेषजम्' इति श्रुतिप्रसिद्धं प्रामाण्यं भज्येत । तथा -

'मातुस्सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ।'
'तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केन चोद्वहिष्यन्ति नराः पापविमोहिताः ॥'

इतिवदन्भगवान्व्यासः कथं खलु तृतीयाविवाहं ब्रूयात् । यदि ब्रूयात् 'सहोवाच व्यासः पाराशर्य' इति श्रुतिव्याख्यातमाप्तमत्वं कथमुज्जीवेत् । स च विप्रलंभककोटिं नाटीकते । किञ्च - मनुव्यासांगिरोयमैस्स्वस्वस्मृतिषु न हि तृतीयाविवाह उक्तः । अपि तु पञ्चमसप्तमार्वाक्तनी विवाह निषेध एवोक्तः । स च

चन्द्रिकाकारेण चोदाहृतः । अतो 'विवाहयेन्मनुः प्राह' इति वचनमसंगतमेवेत्यास्तां तावत् । इदं समस्तं मूर्खास्स्वैरं कुर्वन्तु । हन्त आचाराधिकरणार्थवेदिनोऽपि मातृयोनिबन्धु-संबन्धमनुरुन्धते ।

लोकस्तिष्ठतु शास्त्रार्थं न विविञ्चन्त्यहो बुधाः ।
वृथा किलानुधावन्ति लोकं धर्मस्ततो हतः ॥

किञ्च - 'आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व तृप्तां जुहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेया वपामिव' इत्यर्थवादश्रुतिदर्शनात्तृतीयाविवाहे कर्तव्ये मते 'नापुत्रस्य हि लोकोऽस्ति' इति, 'तत्सर्वे पशवो विदुः' 'तस्मात्पुत्रो मातरं स्वसारं चाधिरोहति' इत्यपि श्रवणात् स्वस्राद्यधिरोहश्च प्रसज्येत । 'सूर्यग्रहे कुरुक्षेत्रे मेषीं कृष्णाजिनादिकम् । चण्डालात्प्रतिगृह्यापि यजेतावश्यकैर्मखैः', इत्यादिना नित्यस्यावश्य-कर्तव्यत्वे तात्पर्यपर्यवसानवत् ऋणापाकरण प्रजातन्त्वव्यवच्छेद वर्णाश्रमधर्मानुष्ठानार्थं विवाहस्यावश्यकर्तव्यत्वे तात्पर्यग्रहणमेव युक्तमिति, सर्वस्मृतीनामविरोधः 'ये तत्र ब्राह्मणा स्संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामास्स्युः । यथा ते तत्र वर्तेरन् ।

तथा तत्र वर्तेथाः' इति श्रुतेः । तस्मान्मातृतः पञ्चमात्पितृतस्सप्तमादूर्ध्वमेव विवाह इति प्रामाणिकानां धर्मशास्त्र घण्टापथः।।

निर्मत्सराः पातकभीरवो ये पश्यन्तु पाणिग्रहनिर्णयं ते ।
बह्वीः स्मृतीर्वीक्ष्य विमृश्य सारं समग्रहीद्वैदिकसार्वभौमः ।।

इति विवाह्यकन्यानिर्णयः समाप्तः

# स्थालीपाक निर्णयः

इह तावत्स्थालीपाको निर्णीयते । आपस्तंबः - 'एवमत ऊर्ध्वं दक्षिणावर्जमुपोषिताभ्यां पर्वसु कार्यः पूर्णपात्रस्तु दक्षिणेत्येके' इति । एवं- 'पत्न्यवहन्ति श्रपयित्वे' त्यादि सूत्रोक्तप्रकारेणेत्यर्थः । अत ऊर्ध्वम् - आग्नेयस्थालीपाकात्परम् । एवं वदता विवाहशेष-मध्ये पर्वसंभवेऽपि तत्र स्थालीपाकः कार्य इत्युक्तं भवति । आग्नेयस्थालीपाकस्य कृतत्वात् । यथाऽऽहुः -

विवाहशेषमध्ये तु पर्वण्युत्पतिते सति ।
तस्मिन्नपि च कर्तव्यं स्थालीपाकं यथाविधि ।।

तत्र यद्यप्यमावास्या विवाहात्स्यादनन्तरम् ।
यदि वा पौर्णमासी स्यात् स्थालीपाकक्रिया मता ।। इति ।

अत्रामावास्यायामपि स्थालीपाकस्मरणमागामिपौर्णमास्या मौढ्याधिमास दोष दुष्टत्वे द्रष्टव्यम् । तथा गौतमः - 'पौर्णमास्युप-क्रमौ दर्शपूर्णमासौ दर्शश्चेत्पूर्व[illegible]येत पौर्ण[illegible]नेष्ट्वाथ तत्कुर्या-

दकुर्वन्पौर्णमासीमाकांक्षेदित्येके' इति । चतुर्थी होमानन्तरं यदि दर्शः पूर्वमागच्छेत् तदा दर्शकालात्पूर्वमेव पौर्णमासीस्थालीपाकं कृत्वा ततस्स्वकाले दर्शस्थालीपाकं कुर्यादिति तद्व्याख्याने व्याख्यातम् । एवमेव स्मृत्यन्तरे चोक्तम्-

पाकयज्ञस्य चारंभमन्वारंभणमेव च ।
पौर्णमास्यां यजेत्पूर्वं दर्शे तु न कथंचन ॥

मौढ्याधिमासदोषे तु पौर्णमास्यां यजेत्कथम् ।
दर्शेऽपि वा यजेत्पूर्वं पौर्णमासीममामपि ॥

अतिकालान्तरारंभो यजमानस्य पापकृत् ।
आयुःश्रियं यशो हन्यात्तस्मात्तौ नात्यतिक्रमेत् ॥

यावद्दर्शं पौर्णमासीस्थालीपाकस्य कालत्वाद्दर्शात्पूर्वमेव पौर्णमासीं यजेत् । एवमिष्ट्वा ततः स्वकाले अमामपि - दर्शमपि यजेत् । न तु प्रतिपदि पौर्णमासीममामपि सह यजेदित्यर्थः । अन्यथा दर्शकालप्राप्तौ न पुनरतिपन्नपौर्णमासानुष्ठानम् । अधिकारान्तरावरोधेन पूर्वाधिकारनिवृत्तेः । तदुक्तं स्मृति-चन्द्रिकायाम्- अकालात्कालत्वेनागामिपर्वकालात्प्रागेवा-तिपन्नपर्वानुष्ठानं कार्यम् । न तत्प्राप्तौ तु व्यतीतानुष्ठानम् । 'तावद्दर्शं

पौर्णमासं यावदन्यो न पर्वकालः' इति श्रुतेः - इति । किञ्च - आगामि पर्वणो दुष्टत्वे -

राका चेच्छेषहोमात्प्रागप्यारंभोऽत्रपर्वणि ।
वैश्वदेवमासिकयो स्संवेशनजपात्परम् ।।

इत्यादिभिः प्राक्छेषहोमात् पर्वभेदानादरेण स्थालीपाकस्यावश्यकर्तव्यत्वावगतेः । अनेनैवाभिप्रायेणापस्तंबेन 'एवमत ऊर्ध्व'मित्यनुशासनाच्चाकरणे प्रत्यवायस्मरणाच्च दर्शेऽपि तत्पूर्वमेव पौर्णमासस्थालीपाकं कृत्वा दर्शं कुर्यादिति सिद्धम् । विवाहानन्तरपर्वणि ग्रहणादिदोष संभवे -

उपरागोऽधिमासो वा यदि प्रथमपर्वणि ।
नाहरेत्प्रथमामिष्टिं मौढ्ये च गुरुशुक्रयोः ।।

इति निषेधात् प्रथमस्थालीपाको न कार्यः । एवं विवाहानन्तरमाषाढादिपितृमास संभवे च न कार्यः ।

स्थालीपाकक्रियां कुर्याद्विवाहादुत्तरायणे ।
पितृमासचतुष्के तु यदि कुर्याद्विनश्यति ।।

इति प्रत्यवायस्मृतेः । ननु- स्थालीपाकाकरणे पुनरौपासनाग्नेः

प्राबल्यं नास्तीतिचेन्न - 'औपासनं होमो वैश्वदेवमष्टक पार्वणश्राद्धं सर्पबलिरीशानबलिः' इति सप्तपाकयज्ञाना पृथक्पृथक्कर्मत्वेनान्योन्यनैरपेक्ष्यात् । ननु- 'आषाढेऽप्यधिके मासे संक्रान्तौ ग्रहणेऽपि वा । अन्वारंभं प्रकुर्वीत समनन्तरपर्वणि' इति वचनादन्वारंभः कार्य इति चेन्मैवम् । 'नाहरेत्प्रथमामिष्टिम्' इति वचनविरोधापत्तेः । आगामिपर्वणि मलाधिकमासमौढ्यादिदोष-संभवे ततः पूर्वमेव विवाहानन्तरं पर्वसंभवे तस्मिन्पर्वणि 'पौर्णमासीममामपि' इत्युक्तक्रमेणान्वारंभं कुर्वीतेत्युक्तत्वाच्च । अन्यथा मलाधिकमासादौ प्रथमस्थालीपाकनिषेधवचननिचयो व्यर्थस्स्यात् । तथा कालनिर्णयादौ

उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यान्मलमासे विवर्जयेत् ।।

पर्व- प्राथमिकेष्टिः प्रथमस्थालीपाकश्च । न तु द्वितीयः । तस्य दोषाभावात् । 'प्रारब्धे तु द्वितीयादौ प्रोक्तदोषो न विद्यते' इति स्मरणात् । स्मृतिसंग्रहे च -

आरंभं दर्शपूर्णेष्ट्योरग्निहोत्रस्य चादिमम् ।
प्रतिष्ठोत्सवकर्माद्या मलमासे विवर्जयेत् ।।

ननु -

अधिमासे तु शुक्रस्य गुरोरस्तमयेऽपि च।
नित्यं नैमित्तिकं कुर्यात्काम्यं कर्म विवर्जयेत् ॥

इति नित्यस्य कर्तव्यत्ववचनात्, 'नित्यानिहापयन्नेनस्वीजायते इति विज्ञायते' इति तदकरणे प्रत्यवायस्मृतेश्च नित्यत्वात् स्थालीपाकः कार्य इति चेन्न नित्यकर्मकार्यत्वपरवचनानां प्रारब्धकर्मविषयत्वात्, मासदोषे तु 'प्रारंभं दर्शपूर्णेष्ट्योः' इत्यादि वचनैस्तेषां प्रारंभनिषेधात्, 'उत्तरे नियतं कुर्यात्पूर्वे तन्निष्फलं भवेत्' इति तत्करणेऽपि नैष्फल्यस्मरणाच्च। अत्र पर्वविषये नियममाहापस्तंबः- 'पर्वसु चोभयोरुपवासः। औपवस्तमेव कालान्तरे भोजनम्। तृप्तिश्चान्नस्य। यच्चैनयोः प्रियं स्यात् तदेतस्मिन्नहनि भुञ्जीयाताम्। अधश्च शयीयाताम्। मैथुनवर्जनं च। श्वोभूते स्थालीपाकः। तस्योपचारः पार्वणेन व्याख्यातः 'नित्यं लोक उपदिशन्ति' इति। ननु एतस्मिन्निति पाणिग्रहणमहः परामृश्यते। तत्र प्रत्यब्दं प्रियभोजनादिकं विधीयत इति व्याख्यातम्। अतः कथमिदं पर्वविषयमिति चेन्न - तथा क्वचिदपि लोके समाचाराभावात्। न हि कश्चिदपि पाणिग्रहणमहः स्मरन्

प्रियभोजनादिकं प्रत्यब्दं करोति । न वा श्वस्स्थालीपाकं चाचरति । नन्वस्य पर्वविषयत्वे पर्वस्विति बहुवचनान्तस्य एतस्मिन्नित्येकवचनान्ततया प्रत्यवमर्शोऽनुपपन्नः- मैवम् । वक्ष्यमाणधर्माणां प्रतिपर्वप्राप्त्यर्थत्वादेकवचनान्तस्य । किञ्च पाणिग्रहणमहरिति विशेषणमेवानुपपन्नम् - तदन्तरेणापि विशेषणार्शस्य गम्यमानत्वात् । यथाहुः - 'गम्यमानस्य चार्थस्य नैव युक्तं विशेषणम् । शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत् ।' तस्मादेतस्मिन्निति प्रकृतपर्वप्रतीतेस्तद्विषयमे-वेदमिति युक्तम् । किञ्च - अत्र पक्षे उपोषिताभ्यामिति विहितमेवौपवस्तमत्रानूद्यते कालान्तरे भोजनमेवौपवस्तं न तु तद्दिवसोपवास इत्यर्थविशेषं बोधयितुम् । तत्र नियम्यते 'तृप्तिश्चान्नस्य' इत्यादिना । ननु पर्वपरत्वे तस्योपचारः पार्वणेन व्याख्यात इति स्वस्य स्वेनैव व्याख्यानमनुपपन्नमिति चेन्न - स्वाध्याय विधिवत्स्वपरनिर्वाहकत्वेन स्वस्याप्यज्ञातार्थज्ञापना-विरोधात् । यद्वा 'एवमत ऊर्ध्वम्' इति पर्वस्वतिदिष्टाग्नेय-स्थालीपाकधर्म एव पार्वणशब्देनोच्यते तस्य नित्यत्वोपदेशार्थम् । अतः 'प्रतिपर्व पत्न्यवहन्ति' इत्याद्युक्तक्रमेणैवोपचारः कार्यः ।

चन्द्रिकायां च- 'औपवस्तं प्रियभोजनं कार्यम्' । तथापस्तंबः - 'यच्चैनयोः प्रियं स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम्' इति । इदं पर्वविषयत्वेनैवोदाहृतम् । अत्र नियमान्तरं च गृह्यपरिशिष्टोक्तम् ।

शाकं मांसं मसूरं च लवणं कोरदूषकान् ।
माषं मधु परान्नं च त्यजेदुपवसंस्त्रियम् ।।

किञ्च त्वत्पक्षे 'नित्यं लोक उपदिशन्ति' इति सूत्रमत्यन्तानुपपन्नम् । प्रतिसंवत्सरं विवाहात्परेद्युः स्थालीपाकः कार्यः - इति शिष्टानुपदेशात् क्वचिदप्याचाराभावाच्च । पर्व विषयत्वे तु सुसंगतमेवेदम् । लोके वेदार्थप्रदर्शके धर्मशास्त्रे गौतमादिभिः 'अष्टका पार्वणं नित्यं स्थालीपाकं समाचरेत्' इति पाकयज्ञेषु नित्यत्वोपदेशात् । अत एव हि प्रारब्धस्यास्य मौढ्यादावपि कर्तव्यतास्मरणम् । तथा विष्णुयामळे-

गुरावस्तंगते शुक्रे बाल्ये वा वार्धकेऽपि वा ।
न दोषाय [1]भवेत्कर्म नित्यत्वा न्न तु दुष्यति ।।

नित्यग्रहणात्काम्यनिषेधः । 'पक्षे वा यदि वा मासे' इत्यकरणे प्रत्यवायस्मरणाच्च नित्यः । अतः प्रियभोजनाधश्शयन-

1 भवेत्कर्म नित्यत्वा न्न तु दुष्यति → भवेन्नित्यं स्थालीपाकं समाचरेत् (पा)

मैथुनवर्जनादि विधानं पर्वविषयत्वेनैव सुसंगतमित्यलम् । अस्य कालमाह वृद्धशातातपः -

पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालस्सविज्ञेयः प्रातरुक्तो मनीषिभिः ।।

ललाटसंमिते भानौ प्रथमः प्रहरः स्मृतः ।
स एवाध्यर्धसंयुक्तः प्रातरित्यभिधीयते ।।

सन्धिभेदेन पर्वचतुर्थांशस्यापि यागकालत्वमाह गोभिलः -

आवर्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ।। इति ।

परतश्चेत्- आवर्तनात्परं संधिश्चेदित्यर्थः ।

रविरावर्तते यस्मिंस्तदावर्तनमिष्यते ।
आवर्तनात्परं सन्धौ यागं कुर्यात्परेऽहनि ।।

इति रवेरावर्तनम् - द्वेधा विभक्तस्य दिनस्यार्धं न तु पञ्चधा विभक्तस्य तृतीयो मध्याह्नभागः । नहि षोडशघटिकाकाले तदधिके वा रविरावर्तते ।

पर्वप्रतिपदोस्सन्धिरर्वागावर्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्स्यादुपक्रमः ।।

आवर्तनात्परं सन्धिर्यदि तस्मिन्नुपक्रमः ।
परेद्यवीष्टिरित्येष पर्वद्वयविनिर्णयः ।।

लोकाक्षिश्च -

पूर्वाह्ने वाथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ।।

तदहः - सन्धिदिनम् । कालाध्वनोरिति द्वितीया । तस्मिन्नहनीत्यर्थः । ननु

'न यष्टव्यश्चतुर्थेंशे यागः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ।।'

इति कात्यायनवचनात्कथं प्रतिपच्चतुर्थेंशे यागः कर्तव्य इति चेन्मैवम् । मध्यन्दिने तदर्वाग्वा सन्धौ तत्रैव यागे कर्तव्ये आलस्यादिना तत्राकृत्वा परदिने प्रतिपच्चतुर्थांशे यदा स्थालीपाकं करोति तद्विषयत्वात् तस्य । आवर्तनादूर्ध्वं पर्वसन्धौ श्वः प्रतिपच्चतुर्थांशे यागस्मरणाच्च । तथा वृद्धशातातपः -

संधिर्यद्यपराह्ने स्याद्यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ।।

यत्त्विदं गार्ग्यवचनं -

'प्रतिपद्यप्रविष्टायां यदि चेष्टिस्समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ॥'

इति तदिदमिष्टिविषयं न स्थालीपाकविषयम् 'पुनः प्रणीय कृत्स्नेष्टिः' इति ज्ञापनात् । मुख्यकालातिपत्तौ गौणकालमाह गोभिलः- 'अथ यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्दर्शपूर्णमासयोर्वा हव्यं होतारं वा नाधिगच्छेत्कथं कुर्यादासायमाहुतेः प्रातराहुति-र्नात्येत्यामावास्यायाः पौर्णमासी नात्येत्यापौर्णमास्या अमावास्या नात्येति' इति । गौतमश्च - 'सर्वोपरपक्षः पौर्णमासस्य पूर्वपक्षो दर्शस्य' इति । काल इति शेषः । कात्यायनश्च -

'पौर्णमास्यत्यये हव्यं होता वा यदहर्भवेत् ।
तदहर्जुहुयादेवममावास्यात्ययेऽपि च ॥'

एवमेषु वचनेषु कृत्स्नस्य पक्षस्य कालत्वोक्तेः क्वचिद्दिने कर्तव्यं न तु प्रतिपदि संहत्य, तस्याः पक्षान्तर[redacted]ाल-त्वादधिकारान्तरावरोधेन पूर्वाधिकारनिवृत्तेः । तथा वामनः-

'उक्तकालव्यतिक्रान्तौ दिवसे यत्रकुत्रचित् ।

अत्र पौर्णमास्यां विशेष : - पूर्णिमा प्रतिपत्सन्धिः संगवावर्तनयो-र्मध्ये यदि स्यात्सद्यस्कालविधिस्स्यात् । अन्वाधानादि तत्रैव स्यान्न पूर्वेद्युः । तथापस्तंबः- 'पौर्णमास्यां त्वन्वाधान-परिस्तरणोपवासास्सद्यो वा सद्यस्कालायां सर्वं क्रियते ' इति । कात्यायनश्च-

सन्धिश्चेत् संगवादूर्ध्वमर्वागावर्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ भवेत् ।।

तथामावास्यायां च विशेषः । अत्र वृद्धशातातपः -

द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्निकी ।
अन्वाधानं चतुर्दश्यां परतस्सोमदर्शनात् ।।

आपराह्निकी कृत्स्नचतुर्थकालव्यापिनीत्यर्थः । तदा पूर्वेद्युरन्वा-धानम् । इष्टिस्तु चतुर्दश्यपरदिने न तु सन्धिदिने प्रतिपदि चन्द्रदर्शन सद्भावात् ।

आवर्तनात्परः संधिर्यदि तस्मिन्नुपक्रम : ।
परेद्यवीष्टिरित्येष पर्वद्वयविनिर्णयः ।।

इत्युक्त नियमोऽत्र नास्तीत्यर्थः । वृद्धवसिष्ठश्च-

'इन्दौ निरुप्ते हविषि पुरस्तादुदिते विधिः ।

जुहोति चाहुतीस्तस्मिन्पश्चादपि हि तद्भवेत् ।।' इति ।

अत्र सन्धिपरिज्ञानोपायमाह कात्यायनः-

'परेऽह्नि घटिका न्यूना स्तथैवाभ्यधिकाश्च याः ।

तदर्धक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् ।।'

लोकाक्षिश्च -

तिथे : परस्या घटिकाश्च यास्स्युः

न्यूनास्तथैवाभ्यधिकाश्च तासाम् ।

अर्धं विभज्याथ तथा प्रयोज्य

ह्रासे च वृद्धौ प्रथमे दिने स्यात् ।। इति ।

प्रथमे-प्रतिपदि । यो ह्रासः क्षयः वृद्धिश्च तद् द्वयं द्वेधा विभज्या

पर्वणि संयोज्य सन्धिर्निश्चेतव्य इत्यर्थः ।

श्रुतिस्मृती यस्य दृशौ प्रसिद्धे

यत्स्वं त्रयीलक्षणमद्वितीयम् ।

सद्वृत्तभव्याभरणस्समिन्धे

सुधीरयं वैदिकसार्वभौमः ।।

इति स्थालीपाकनिर्णयः समाप्तः ।

# अभक्ष्यभक्षण प्रायश्चित्त निर्णयः

इह तावज्जात्यादिदुष्टभक्षणनिबन्धनं प्रायश्चित्तं निर्णीयते । अत्र व्यासः -

संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः ।
भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत् ॥

संवर्त :-

केशकीटावपन्नं च नीलीलाक्षोपवासितम् ।
स्नाय्वस्थिचर्मसंस्पृष्टं भुक्त्वा तूपवसेदहः ॥

शातातपः - 'केशकीटावपन्न रुधिर मांसास्पृश्यस्पृष्ट भ्रूणघ्नावेक्षितावलीढ श्वसूकरगवाघ्रात शूक्त पर्युषित वृथापक्व देवान्न हविषां भोजने उपवासः पञ्चगव्याशनं च' इति । एतदुभयमकामविषयम् । कामतस्तु -

मृद्वारिकुसुमादींश्च फलकन्देक्षुमूलकान् ।
विण्मूत्रदूषितान्प्राश्य कृच्छ्रपादं समाचरेत् ॥

तन्निकृष्टेऽर्धमेव स्यात् [1]कृच्छ्रस्याशु विशोधनम् ।

इति विष्णूक्तं वेदितव्यम् । देवान्नम् - अनिवेदितम् । तथ विष्वक्सेनः -

प्राक्साधितं तु यागार्थं देवतानां प्रयत्नतः ।
तत्समर्पणपर्यन्तं तावद्देवान्नमुच्यते ॥

अतो निवेदितं भोज्यमेव । अल्पसंसर्गे पादो महत्संसर्गेऽर्धमिति व्यवस्था । शंखः - 'अमेध्यपतितचण्डाल पुल्कसरजस्वलाप्रसूति कुणिकुष्ठिकुनखस्पृष्टानि भुक्त्वा कृच्छ्रं समाचरेत् ' इति । कुणिर्हस्तविकलः । एतत्कामकारविषयम् । अकामतोऽर्धम् । अशक्तविषये विष्णुः -

भुक्त्वा स्पृश्यैस्तथाऽऽशौचिकेशकीटादिदूषितम् ।
कुशोदुंबरविल्वाद्यैः पनसांबुजपत्रकैः ।
शंखपुष्पीसुवर्चादि क्वाथं पीत्वा विशुध्यति ॥

शूद्राद्युपहते हारीतः -

न शूद्रोपहतं भोज्यं कीटैर्वामेध्यसेविभिः ।

1 कृच्छ्रस्याशु विशोधनम् → कृच्छ्रस्याशुचि शोधनम् (पा)

आपस्तंबः - भुञ्जानं वा यत्र शूद्र उपस्पृशेदनर्हद्भिर्वा समानपङ्क्तौ भुञ्जानेषु वा यत्रानूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा । कुत्सयित्वा वा यत्रान्नं दद्युरिति । तत्र प्रायश्चित्तमहोरात्रम् । उच्छिष्टपङ्क्तिभोजने क्रतुः -

'यस्तु भुङ्क्ते द्विजः पङ्क्त्यामुच्छिष्टायां कदाचन ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ।।

षट्त्रिंशन्मते विशेषः । अजाविकमहिषमृगाणां मांसभक्षणे केशनखरुधिरप्राशने बुद्धिपूर्वे त्रिरात्रमज्ञानामुपवासः' इति । अकामतस्सकृद्भक्षणे प्रचेताः 'नखकेशमृल्लोष्टभक्षणे अहोरात्राभोजनाच्छुद्धिः' इति । मुखमात्रप्रवेशे स्मृत्यन्तरे-

केशकीटनखं प्राश्य अस्थि कीकटमेव वा ।
हेमतप्तघृतं पीत्वा तत्क्षणादेव शुध्यति ।।

सूक्ष्मतरक्रिमिकीटास्थिभक्षणे हारीतः - कीटपिपीलिका जलूका तदंगास्थिभक्षणे गोमूत्रगोमयाहारस्त्रिरात्रेण विशुध्यति । मनुः -

बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च ।
केशकीटावपन्नं च पिबेद् ब्राह्मीं सुवर्चलाम् ।।

इदमकामविषयम्। कामतस्तु विष्णुः -

पक्षिश्वापदजग्धस्य रसस्यान्नस्य भूयसः।
संस्काररहितस्यापि भोजने कृच्छ्रपादकम्॥

अकामतोऽभ्याशे शातातपः - श्वकाकाद्यवलीढशूद्रोच्छेषण भोजनेत्वतिकृच्छ्रम्' इति। कामतोऽभ्याशे स एव -

शुनामुच्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत्।
काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत्॥

कामतो ब्राह्मणाद्युच्छिष्टाशने बृहद्यमः - 'ब्राह्मणश्शूद्रोच्छिष्टाशं सप्ताहं पञ्चगव्यप्राशनं वैश्योच्छिष्टाशने पञ्चाहं राजन्योच्छिष्टाशं त्रिरात्रं ब्राह्मणोच्छिष्टाशनेऽहोरात्रम्' इति। कामतोभ्याशे- मनुः

भुक्त्वा सहाब्राह्मणेन प्राजापत्येन शुध्यति।
भूभुजा सह भुक्त्वान्नं तप्तकृच्छ्रेण शुध्यति॥

वैश्येन सह भुक्त्वान्नमतिकृच्छ्रेण शुध्यति।
शूद्रेण सह भुक्त्वान्नं चान्द्रायणमथाचरेत्॥

अकामतस्तु शंख :-'ब्राह्मणोच्छिष्टाशने महाव्याहृतिभि रभिमन्त्र्यापः पिबेत क्षत्रियोच्छिष्टाशने ब्राह्मीरसपक्केन त्र्य

क्षीरेण वर्तयेत्, वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो भूत्वा ब्राह्मीं सुवर्चलां पिबेत्, शूद्रोच्छिष्टभोजने षड्रात्रम्' इति। तत्राभ्यासे द्वैगुण्यादिकल्प्यम्। एतच्च पित्राद्युच्छिष्टव्यतिरेकेण। तत्र दोषाभावात्। पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्। धर्मविप्रतिपत्तावभोज्यम्।

गुरोस्स्वस्य यदुच्छिष्टं भोज्यं तत्पुत्रशिष्ययोः।
भार्याभृतकदासेभ्य उच्छिष्टं शेषयेद् बुधः' ॥

इत्यादिस्मृतिभ्यः। अतो ब्रह्मचारिभिर्गृहस्थैश्चाचार्याद्युच्छिष्टं भोज्यमेव विहितत्वात्। सह भोजने बृहद्व्यासः-

माता वा भगिनी वाथ भार्या वान्याश्च योषितः।
न ताभिस्सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्॥

आपस्तंबः -'शूद्रोच्छिष्ट भोजने सप्तरात्रमभोजनं स्त्रीणां चैवम्' इति। यत्त्वंगिरोवचनम् -

ब्राह्मण्या सह योश्नीयादुच्छिष्टं वा कदाचन।
तत्र दोषं न मन्यन्ते सर्व एव मनीषिणः॥ इति,

इदं पत्न्या सह भोजनं वि[redacted]पद्विषयं वेति विज्ञानेश्वरेण

व्याख्यातम् । अंगिराः -

अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्धं च ब्रह्मक्षत्रविशां क्रमात् ॥

चान्द्रं चान्द्रायणम् ।

चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे ।
चान्द्रायणं चरेद्विप्रः क्षत्रस्सान्तपनं चरेत् ॥
षड्रात्रं च त्रिरात्रं च वर्णयोरानुपूर्व्यश : ।

आपदि तु पराशरः -

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मानस्तोकेन शुध्येत द्रुपदां वा शतं जपेत् ॥

षट्त्रिंशन्मते -

दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं च यत् ।
अभ्यंगाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुध्यति ॥

यदाह शातातपः -

पीतशेषं तु यत्तोयं भोजने मुखनिस्सृतम् ।

इति, तदभ्यासविषयम् । पीतशेषमितिचषकस्थविषयम् । 'पीत्वावशिष्टं चषके पुनस्तन्न पिबेज्जलम्' इतिशाण्डिल्यस्मृतेः । धीपूर्वे तु स एव -

पीतोच्छिष्टं तु पानीयं पीत्वा तु ब्राह्मणः क्वचित् ।
त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ॥

अकामतस्त्वर्धं कल्प्यम् । उपहतोदपाने विष्णुः - 'मृतपञ्चनखात्कूपादत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मणः त्र्यहमुपवसेद् द्व्यहं राजन्य एकाहं वैश्यः । शूद्रो नक्तं [1]सर्वे चान्ते व्रतस्य पञ्चगव्यं पिबेयुः' इति। अत्यन्तोपहतात् मूत्रपुरीषादिभिरुपहतादित्यर्थः । यदा तु तत्रैव शवमुच्छूनतया भिन्नं भवति तदा पुनर्विशेषमाह हारीतः -

'क्लिन्नं भिन्नं शवं तोये तत्रस्थं यदि तत्पिबेत् ।
शुद्ध्यै चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा ॥

यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः ।
जपंस्त्रिषवणस्नायी त्वहोरात्रेण शुध्यति ॥

1. अत्र सर्वपदं त्रैवर्णिकपरम् । शूद्रस्य पञ्चगव्यप्राशननिषेधात् । यदाह एतत्सूत्रसमनन्तरमेव विष्णुः -

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् ।
उभौ तौ नरकं यातो महारौरवसंज्ञितम् ॥

इदं चान्द्रायणं कामतो मनुष्यशवोपहतजलपानविषयम् ।

अकामतः पाने देवलः -

क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते ।
पयः पिबेत्त्रिरात्रं तु मानुषे द्विगुणं भवेत् ॥

द्विगुणं षड्रात्रम् । आपस्तंबः -

चण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत् ॥

चरेत्सान्तपनं विप्रः प्राजापत्यं तु भूमिपः ।
तदर्धं तु चरेद्वैश्यः शूद्रः पादं समाचरेत् ॥

शूद्रादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपिवा ।
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ॥

तत्तोयं यः विबेद्विप्रः कामतोऽकामतोऽपिवा ।
अकामान्नक्तभोजी स्यादहोरात्रं तु कामतः ॥

देवलः -

चण्डालकूपभाण्डस्थमज्ञानादुदकं पिबेत् ।
द्विजस्त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुध्यति ॥

रजकादिभाण्डतोये पराशर: -

भाण्डस्थमन्त्यजानां तु जलं दधि पय: पिबेत्।
ब्राह्मण: क्षत्रियो वैश्य: शूद्रश्चैव प्रमादत: ॥

ब्रह्मकूर्चोपवासेन द्विजातीनां च निष्कृति:।
शूद्रस्य चोपवासेन तथा दानेन शक्तित: ॥

कामतस्तु द्विगुणम्। अभ्यासे त्वापस्तंब: -

अन्त्यजै: खानिता: कूपास्तटाका वाप्य एव वा।
एषु स्नात्वा च पीत्वा च प्राजापत्येन शुध्यति ॥

अत्रापि अन्त्यजा रजकादय:।

रजकश्चर्मकारश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजास्स्मृता: ॥

इत्युक्ता ग्रामान्त्यजा एवात्रान्त्यजशब्देनोच्यन्ते। न तु बहिरन्त्यजाश्च इतिविज्ञानेश्वरेण विवृतम्। अशक्तविषये पराशर:-

प्रपास्वरण्ये [1]घटके च सैरे द्रोण्यां जलं [2]केशविनिस्सृतं च।
श्वपाकचण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुध्येत् ॥

1 घटके → पुटके (पा) 2 केश → कोश (पा)

संवर्तः -

पादेन पादमाक्रम्य तोयं पिबति यो द्विजः ।
अहोरात्रोपवासेन पञ्चगव्येन शुध्यति ॥

वृद्धयाज्ञवल्क्यः -

शृंगास्थिदन्तजैः पात्रैः शंखशुक्तिकपर्दिकैः ।
पीत्वा नवोदकं चैव पञ्चगव्येन शुध्यति ॥

एतदकामविषयम् । कामतस्तूपवासश्च ।

काले नवोदकं शुद्धं न पिबेत्त्र्यहमेव तु ।
अकाले सप्तरात्रं तु पीत्वा नाद्यादहर्निशम् ॥

इति स्मरणात् । क्षीरविषये मनुः-

अनिर्दशाया गोःक्षीरमौष्ट्रमैकशफं तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोःपयः ॥

आरण्यानां च सर्वेषां मृगाणां महिषीं विना ।
स्त्रीक्षीरं च विवर्ज्यानि सर्वशूक्तानि चैव हि ॥ इति ।

एतेषु 'शेषेषूपवसेदहः' इत्येकरात्रोपवास उक्तः । सोऽकामतस्स कृत्पाने द्रष्टव्यः । तथा विष्णुः - 'गोऽजा महिषी वर्जं सर्वपयां

सन्धिनीयमसूस्यन्दिनीविवत्साक्षीरं च अमेध्यभुजश्च इति च। सन्धिनी - या वृषेण सन्धीयते। 'वशां वन्ध्यां विजानीयाद्वृषाक्रान्तां च संधिनीम्' इति त्रिकाण्डी। 'या चैकां वेलामतिक्रम्य दुह्यते या च वत्सान्तरेण सन्धीयते सा च सन्धिनी' इति विज्ञानेश्वरः। अनतिक्रान्तदशाहानि अनिर्दशाहानि। विवत्सा - मृतवत्सा। यमसूः यमळप्रसवित्री स्यन्दिनी सदा स्रवत्क्षीरा। एकशफा बडबादयः। स्त्रीक्षीरं प्रसिद्धम्। शंखः - 'सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्जम्' इति। अजाग्रहणादाविकं त्याज्यम्। आविकम् - ऐडकम्। बोधायनः- 'सन्धिनीक्षीरमपेयं विवत्सान्यवत्सयोश्च। अपेयपयःपाने कृच्छ्रमन्यत्र गव्याद्गव्ये तु त्रिरात्रमुपवासः' - इदं त्रिरात्रस्मरणमज्ञानविषयम्। ज्ञानतस्त्वंगिराः-

अनिर्दशाया गोःक्षीरं माहिष्यं चाजमेव च।
गोश्च क्षीरं विवत्सायास्सन्धिन्याश्च पयस्तथा॥

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः।
सप्तरात्रं व्रतं कुर्यात्तासां पयसि च स्मृतम्॥

अभ्यासे मनुः -

गोऽजाविमहिषीक्षीरवर्जं सर्वपयांसि च ।
तान्यप्यनिर्दशाहानि पीत्वा चान्द्रायणं चरेत् ॥

जाबालिश्च -

सन्धिन्यमेध्यभक्षिण्योः पीत्वा पक्षं व्रतं चरेत् ।
क्षीरं क्षीरविकारांश्च शकृन्मूत्रमथापि वा ॥
अपेयमन्यवत्साया विवत्सायास्तथैव च ।

कामतोऽभ्यासे पैठीनसिः -

'खरोष्ट्रमृगक्षीरप्राशने तप्तकृच्छ्रं पुनरुपनयनं च अनिर्दशाया गोः - क्षीरपाने षड्रात्रमभोजनम् । सर्वासां द्विस्तनीनां पयः प्राशनेप्यजा-वर्जमेतदेव' इति । अत्र शंखः -

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।
सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समाहितः ॥
सन्धिन्यमेध्यभक्षिण्योर्भुक्त्वा पक्षं व्रतं चरेत् ॥

अत्र ब्राह्मणव्यतिरिक्तस्य कपिलाक्षीरनिषेधः ।

क्षत्रियश्चापि वृत्तस्थो वैश्यश्शूद्रोऽथवा पुनः ।
यः पिबेत्कपिलाक्षीरं ततोऽन्यो नास्ति पापकृत् ॥

पराशरः -

वाग्दुष्टं भावदुष्टं च भावने भावदूषितम् ।
भुक्त्वान्नं ब्राह्मणः पश्चात्त्रिरात्रेण विशुध्यति ॥

एतत्कामकारविषयम् । शंकायां तु वसिष्ठः -

शंकास्थाने समुत्पन्ने ह्यभोज्याभक्ष्यसंज्ञिते ।
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥

अक्षारलवणं रूक्षं पिबेद् ब्राह्मीं सुवर्चलाम् ।
त्रिरात्रं शंखपुष्पं वा ब्राह्मणः पयसा सह ॥

पलाशबिल्वपत्राणि कुशाश्वत्थमुदुम्बरम् ।
अपः पिबेत्क्वाथयित्वा त्रिरात्रेण विशुध्यति ॥

प्रचेता : -

भक्षयेद्यदि नीलीं तु प्रमादाद् ब्राह्मणः क्वचित् ।
चान्द्रायणेन शुद्धिस्स्यादापस्तंबोऽब्रवीन्मुनिः ॥

कामतोऽभ्यासे द्विगुणादि कल्प्यम् । यत्तु सुमन्तूक्तम् । 'लशुन-पलाण्डुगृञ्जनकवकभक्षणे सावित्र्यष्टसहस्रेण मूर्ध्नि संपाता-

भवन्ति यानि चैवं प्रकाराणि तेष्वपि न दोषः' इति । तत् एकसाध्यव्याध्युपशमनार्थे द्रष्टव्यम् । अन्यत्र याज्ञवल्क्यः -

पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।
लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥

पलाण्डुः- स्थूलकन्दनालो लशुनानुकारी । विड्वराहो ग्रामसूकरः। छत्राकं सर्पच्छत्रम् । ग्रामकुक्कुटः प्रसिद्धः । लशुनं रसोनं सूक्ष्मश्वेत-कन्दनाळम् । गृञ्जनम् - लशुनानुकारिलोहितसूक्ष्मकन्दम् । मतिपूर्वदीर्घकालाभ्यासे मनुः -

छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः ॥

अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सांतपनं चरेत् ।
यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥

छत्राकं कवकम् । अमतिपूर्वाभ्यासे शंख : -'लशुनपलाण्डु-गृञ्जनविड्वराह ग्रामकुक्कुटकुंभीकभक्षणे द्वादशरात्रं पयः पिबेत्' इति । कुंभीकं छत्राकम् । हारीतः -

ऊपोतकीं लतायुक्तां स्वस्तिकीं शिग्रुमूलकम् ।
हस्तिनीं नारिकेलीञ्च भुक्त्वा चोपवसेदहः ॥

कामतोऽभ्यासे बृहद्यमः -

खड्वा वार्ताक कुंभीक व्रश्चन प्रभवांस्तथा।
भूस्तृणं शिग्रुभेदं च कुक्कुटं कवकानि च।
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद् द्विजः॥

खड्वा-पक्षिविशेष :। मतिपूर्वाभ्यासे मनुः -

तण्डुलीयक कुंभीक व्रश्चन प्रभवांस्तथा।
नालिका नारिकेरी च श्लेष्मातकफलानि च॥

भूस्तृणं शिग्रुकं चैव खड्गकं कवकं तथा।
एतेषां भक्षणं कृत्वा प्राजापत्यं समाचरेत्॥

एतेषां कामतस्सकृद्भक्षणे 'शेषेषूपवसेदहः' इति मनूक्तोपवासः कार्यः। अशक्तविषये विष्णुः -

'भुक्त्वाऽस्पृश्यै स्तथाऽऽशौचि केशकीटादि दूषितम्।
कुशोदुंबरबिल्वाद्यैः पनसांबुज पत्रकैः॥
शंखपुष्पीसुवर्चादिक्काथं पीत्वा विशुध्यति।' इति।

व्यासः -

आसनारूढपादो वा वस्त्रार्धप्रावृतोपि वा।
मुखेन धमितं चैव भुक्त्वा चान्द्रायणं चरेत्॥

शातातपः -

उपदंशमथान्नं वा भोजने मुखनिस्सृतम् ।
द्विजातीनामभोज्यं तद्भुक्त्वा चान्द्रायणं चरेत् ॥

एतद्वचनद्वयमभ्यासविषयम् । प्रायश्चित्तस्य गुरुत्वात् । बृहस्पतिः-

अलेह्यानामपेयानामभक्ष्याणां च भक्षणे ।
रेतोमूत्रपुरीषाणां शुद्ध्यै चान्द्रायणं स्मृतम् ॥

अलेह्यादिकमभ्यासविषयम् । पुरीषादि सकृद्विषयम् । प्रजापतिः-

ब्रह्मसूत्रं विना भुङ्क्तेविण्मूत्रं कुरुतेऽपि वा ।
गायत्र्यष्टसहस्त्रेण प्राणायामैर्विशुध्यति ॥

मनुः -

अनापदि चरेद्यस्तु सिद्धभिक्षां गृहे वसन् ।
दशरात्रं चरेद्वज्रमापत्काले त्र्यहं विदुः ॥

प्रतिमासमिदं प्रोक्तमभक्ष्यं प्रति शंकया ।
प्रतिसंवत्सरं चापि श्रोत्रियस्य विधीयते ॥

सिद्धभिक्षाग्रहणादामे तु न दोषः । गृहे वसन् गृहस्थः

वज्रमाहांगिराः -

गोमूत्रेण तु संयुक्तं यावकञ्चोपयोजयेत् ।
एतत्तु विहितं पुण्यं कृत्स्नमंगिरसा स्वयम् ॥
प्रणवान्तसमारंभं नाम्ना वज्रमिति स्मृतम् ।

हारीत: -

केवलान्यपि शूक्तानि तथा पर्युषितं च यत् ।
ऋजीषपक्वं भुक्त्वा तु त्रिरात्रं तु व्रती भवेत् ॥

ऋजीषम् - [1]अनग्निरूष्मा, तत्पक्वमृजीषपक्वम् । इदं घृतहीन-विषयम् । 'ऋजीषपक्वं भोक्तव्यं सर्पिर्युक्तमिति स्थिति:' इति स्मृते: । अत्र द्वि:पक्वपर्युषितशूक्तविषये भोज्याभोज्यविवेको-ऽस्मदुक्ते स्मृतिरत्नाकरे विस्तरेण द्रष्टव्य: । शातातप: -

वृथापाकस्य भुञ्जान: प्रायश्चित्तं चरेद् बुध: ।
प्राणायामं त्रिरभ्यस्य घृतं प्राश्य विशुध्यति ॥

वृथापाक: - औपासनरहित: । इदमज्ञानतस्सकृद्भुक्तविषयम् ।

मनु:-

अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ।
पीलुं गव्यं च पीयूषं प्रयत्नेन विवर्जयेत् ॥

1.अत्र आन्ध्रलिपि पुस्तके हस्तलिखित पुस्तके च 'अनग्निरूष्णा 'इति वर्तते ।

पीयूषम् - अनिर्दशाहगवीक्षीरम् । अमेध्यप्रभवाणि चेति वृक्ष-व्यतिरिक्तसर्ववस्तुविषयम् । वृक्षस्य तु न दोषः । तथा बोधायनः -

अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः ।
तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ॥

मनुः पुनरभोज्यानि परिगणय्य प्रायश्चित्तमाह -

मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ।
केशकीटावपन्नं च पदा स्पृष्टं च कामतः ॥

भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया ।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च ॥

गवा चान्नमुपघ्रातं घुष्टान्नं च विशेषतः ।
गणान्नं गणिकान्नं च विदुषां च जुगुप्सितम् ॥

स्तेनगायनयोश्चान्नं तक्ष्णो वार्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य [1]निगडस्य च ॥

अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च ।
शूक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च ॥

1 निगडस्येति तृतीयार्थे षष्ठी ॥

चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ।
उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् ।
अनर्चितं वृथामांसमवीरायाश्च योषितः ।।

द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् ।
पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा ।।

शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च ।
कर्मारस्य निषादस्य रंगावतरणस्य च ।।

सुवर्णकर्तुर्वैणस्य शस्त्रविक्रयिणस्तथा ।
श्ववतां शौण्डिकानां च चेलनिर्णेजकस्य च ।
रंजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ।।

मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ।
अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ।।

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुस्सुवर्णकारान्नं यशश्चर्मावकर्तिनः ।।

कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च ।
गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ।।

पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् ।
विष्ठां वार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ॥

य एभ्योऽन्येत्वभोज्यान्नाः क्रमशः परिकीर्तिताः ।
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः ॥

भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ।
मत्या भुक्त्वाचरेत्कृच्छ्रं रेतोविण्मूत्रमेव च ॥ इति ।

यमः-

अपाङ्क्तेयस्य यः कश्चित्पङ्क्तौ भुङ्क्तेद्विजोत्तमः ।
अहोरात्रोपोषितस्सन् पञ्चगव्येन शुध्यति ॥

पक्षे वा यदि वा मासे यस्य नाश्नन्ति देवताः ।
भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत् ।

पक्षे नाश्नन्तीति स्थालीपाकाभाव उक्तः । मासे नाश्नन्तीति दर्श-श्राद्धाभाव उक्तः । अतस्तद्द्वयमवश्यं कर्तव्यम् । तदकर्तुरन्नभोजने चान्द्रायणं कार्य मित्यर्थः । सर्वाभक्ष्यभक्षणे कर्तव्यविशेषमाह यमः -

स्वस्तिकर्मनिरूहैश्च प्रच्छर्दन विरेचनैः ।
शिशुकृच्छ्रेण शुध्येत तस्मान्नास्त्यत्र संशयः ।

संवर्तः-

दृष्ट्वोदक्यां च चण्डालान् प्रतिलोमांस्तथानुजान् ।
भुञ्जानोनुद्गिरन् भुक्तं त्रिरात्रादेकतः शुचिः ॥

अनुजान्- अनुलोमजान् । भुक्तमुद्गिरन्नेकरात्रोपवासेन शुचिः । अनुद्गिरन्पुनस्त्रिरात्रोपवासाच्छुचिरित्यर्थः । अंगिराः -

अन्तर्दशाहे भुक्त्वान्नं सूतके मृतके तथा ।
असंस्पृश्यो भवेत्तावद्यावदन्नं व्रजत्यधः ॥

भुक्तमन्नं जीर्णं सन्निश्शेषेण यावदधो व्रजति तावदस्पृश्यः । अधो व्रजतीति निष्पुरीषत्वमेवोच्यते, तच्च कियता कालेनेत्याकाङ्क्षाया-मापस्तंबः - 'अभोज्यं भुक्त्वा नैष्पुरीष्यम् । तत्सप्तरात्रेणावाप्यते। एतच्च गुरुद्रव्याशनविषयम् । लघुपदार्थाशने त्र्यहमेव ।' अनेना-भिप्रायेण गौतमः - 'अभक्ष्यभोजने निष्पुरीषभावस्त्रिरात्रं सप्तरात्रं वा' इति । स्मृत्यन्तरे-

चण्डालसूतिकोदक्यावाक्यं श्रुत्वा द्विजोत्तमः ।
भुक्त्वा तु ग्रासमात्रेण दिनमेकमभोजनम् ॥

संग्रहे च -

उदक्यामथ चण्डालं ग्रामकुक्कुटसूकरौ ।
भुक्त्यन्तरे समीक्ष्यैतान्जपेत्पूर्वोदितामृचम् ।।

ऋक् - मानस्तोक इति मन्त्रः । तथा-

चण्डालं पतितं श्वान मुदक्यां सूतिकां तथा ।
दृष्ट्वा भुक्त्यन्तरे स्नात्वा मानस्तोकऋचं जपेत् ।।

होमे दाने च यागे च यदेभिरवलोकितम् ।
दैवे कर्मणि पित्र्ये च तत्सर्वं परिवर्जयेत् ।।

रजस्वलादृष्टमन्नं भुक्त्वा वमनमिष्यते ।
चण्डालदृष्टमन्नं च सूतिकादृष्टमेव च ।।

पराशरः -

एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ।।

मोहाद्भुञ्जीत चेत्तस्यां पङ्क्तावुच्छिष्टभोजनम् ।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं स्मृतम् ।।

यदा भोजनकाले तु अशुचिर्भवति द्विजः ।
पात्रे निधाय तं ग्रासं स्नात्वा विप्रो विशुध्यति ॥

विशुध्यत्युपवासेन त्रिरात्रेणैव भोजने ।

स्मृत्यन्तरे -

एकपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

कृते मूत्रे पुरीषे वा भुक्त्वोच्छिष्टे तथा द्विजः ।
श्वादिस्पृष्टो जपेन्मन्त्रं सहस्रं स्नानपूर्वकम् ॥

चण्डालाद्यैस्तु संस्पृष्ट उच्छिष्टश्चेद् द्विजोत्तमः ।
गोमूत्रयावकाहारः षड्रात्रेण विशुध्यति ॥

हारीतः -

भोजने तु गुदस्रावे त्यक्त्वान्नं शौचमाचरेत् ।
स्नात्वोपोष्य घृतं प्राश्य पञ्चगव्येन शुध्यति ॥

स्मृत्यन्तरे -

यत्यन्नं यतिपात्रस्थं यतिना प्रेषितं च यत् ।
[1]अन्नत्रयं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥

---

1अन्नत्रयं न भोक्तव्यं → तदेतदन्नत्रितयं (पा)

एकादश्यां तु यो भुङ्क्ते तद्भुक्तं श्वानविट्समम् ।
प्रतिग्रासमघं भुङ्क्ते भुक्त्वा चान्द्रायणं चरेत् ॥

निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः ।
एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता ॥

एकपङ्क्तौ तु भुञ्जान उच्छिष्टं स्पृशते यदि ।
अन्नं त्यजेतां द्वौ विप्रौ भुक्त्वा चान्द्रायणं चरेत् ॥

भुञ्जानानां मिथस्स्पर्शे यन्मात्रमवशिष्यते ।
तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

इदं भुञ्जानानां मिथस्पर्शविषयम् । पूर्व वचनं त
मिथस्स्पर्शव्यतिरेकेण भुक्तिपात्रस्थोच्छिष्टस्पर्शविषयमि
विवेकः । हारीतः -

भुक्त्वा ग्रहणकाले तु द्विजश्चान्द्रायणं चरेत् ।
तस्मिन्नेव दिने भुक्त्वा श्राद्धे तु त्र्यहमाचरेत् ॥

मार्कण्डेयः -

चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ।
ग्रहणं तु भवेत्तस्मिन्न पूर्वं भोजन क्रिया ॥

नवश्राद्धं ग्रामयाजकान्नं संग्रहभोजनम् ।
नारीप्रथमगर्भान्नं भुक्त्वा चान्द्रायणं चरेत् ॥

अत्र नवश्राद्धग्रहणादन्यश्राद्धे विशेषोऽवगम्यते। क्षत्रियादिश्राद्ध-विषयेत्वनापदि षट्त्रिंशन्मते -

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
त्रैपक्षिके सान्तपनं कृच्छ्रं मासद्वये स्मृतम् ॥

क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम् ।
वैश्यस्यार्धादिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः ॥

शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम् ।
सार्धं चान्द्रायणं मासे त्रिपक्षेत्वैन्दवं स्मृतम् ॥

मासद्वये पराकस्स्यादूर्ध्वं सान्तपनं स्मृतम् इति । स्तेनपतित-क्लीबाद्यपाङ्क्तेयानां श्राद्धे भरद्वाजः -

ब्राह्मणस्तत्र भुक्त्वान्नं शिशुचान्द्रायणं चरेत् ।
आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुध्यति ॥
संकल्पिते तथा भुक्त्वा त्रिरात्रं क्षपणं स्मृतम् ॥ इति ।

तथा सर्पादिहतश्राद्धे -

'पतनानशनैश्चैव विषोद्बन्धोदकैर्मृतौ ।
भुक्त्वैषां षोडशश्राद्धे [1]चरेच्चान्द्रायणद्वयम् ।।' इति ।

ब्राह्मणश्राद्धे अंगिराः-

'प्राजापत्यं नवश्राद्धे प्राणायामान्षडाचरेत् ।
उपवासस्त्रिमासादि वत्सरान्तं प्रकीर्तितः ।।

प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डके ।
आमरूपे स्मृतं नक्तं तथैव व्रतपारणे ।।

त्रैपक्षिकेऽतिकृच्छ्रं स्यात् षाण्मासे कृच्छ्रमेव तु ।
द्विगुणं क्षत्रियस्यैतत् त्रिगुणं वैश्यभोजने ।।
साक्षाच्चतुर्गुणं ज्ञेयं कृते शूद्रस्य भोजने'।। इति ।

शूद्रविषये शंखः-

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
त्रैपक्षिकेऽतिकृच्छ्रं स्यात्षाण्मासे कृच्छ्रमेव तु ।।

आमश्राद्धाशने विद्वान् मासमेकं व्रतं चरेत् ।
आब्दिके कृच्छ्रपादस्स्यादेकाहं पुनराब्दिके ।।

ब्रह्मचर्यमनध्यायस्सर्वेष्वेवं विनिर्णयः।। इति ।

1 चरेच्चान्द्रायणद्वयम → चरेच्चान्द्रायणं द्विजः (पा)

ब्रह्मचारिविषये मनुः -

मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः ।
त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ।।

प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति । इति ।

इदमज्ञानविषयम् । ज्ञानतस्तु -

मधु मांसं च योऽश्नीयाच्छ्राद्धे सूतक एव च ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ।।

आमश्राद्धे भवेदर्धं प्राजापत्यस्य सर्वदा ।। इति ।

यमः -

ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जीवश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ।। इति ।

यस्तु बलात्कारेण म्लेच्छाद्यन्नं भोज्यते तस्यापस्तंबो विशेषमाह-

बलाद्दासीकृता ये तु म्लेच्छचण्डालदस्युभिः ।
अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ।।

उच्छिष्टमार्जनं चैव तथा तस्यैव भोजनम् ।
खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ।।

तत्स्त्रीणां च तथा संगं ताभिश्च सहभोजनम् ।
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ॥

चान्द्रायणं चाहिताग्नेः पराकस्त्वथवा भवेत् ।
चान्द्रायणं पराकं च चरेत्संवत्सरोषितः ॥

संवत्सरोषितश्शूद्रो मासार्धं यावकं पिबेत् ।
मासमात्रोषितश्शूद्रः कृच्छ्रपादेन शुध्यति ॥

ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः ।
संवत्सरैस्त्रिभिश्चैव तद्भावं सन्निगच्छति ॥ इति ।

तद्भावस्तज्जातित्वं तत्साम्यमिति यावत् । एवं साम्यापत्तिस्मरणं वत्सरत्रयात्परं प्रायश्चित्ताभावप्रदर्शनपरम् । 'प्रतिलोमा धर्महीना' इति स्मृतधर्मविधुरम्लेच्छादिजातित्वापत्तेः । अत्र दासीकरणादीन्यष्टौ निमित्तानि । अतश्च 'प्रतिनिमित्तं नैमित्तिकमावर्तते' इति न्यायेन एकैकस्य निमित्तस्य प्राजापत्यं भवति यावन्निमित्तं संभवति तावत्प्राजापत्यकृच्छ्राचरणं कार्य मित्यर्थः । यस्तु बलात्कारेण भोज्यते तस्यापस्तंबेन विशेष उक्तः, इति विज्ञानेश्वरेण भोजनमात्रस्य निमित्तत्वोक्तेः, प्रत्येकं निमित्तमिति सुस्पष्टम् । इ

सकृद्भुक्ता तु या नारी नेच्छती पापकर्मभिः ।
प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन च ।। इति ।

अत्र सकृत्कृतस्यैव प्राजापत्यस्मरणात् 'तत्स्त्रीणां च तथा संगम्' इत्युक्तस्त्रीसंगस्यापि सकृत्त्वं सिद्धम् । एवं तत्सहपठितानां सहभोजनादीनां सकृत्त्वं द्रष्टव्यम् । अभ्यासे तु द्विगुणम् । आहिताग्नेः प्रतिनिमित्तं चान्द्रायणम् अभ्यासे तु द्विगुणम् । एवं ब्राह्मणगवादिप्राणिहिंसाव्यतिरेकेण मासमात्रोषितश्चेत्प्राजापत्यम् । आहिताग्नेश्चान्द्रायणम् । संवत्सरोषिते चान्द्रपराकौ । ऊर्ध्वं संवत्सराद् द्विगुणादि कल्प्यम् । संवत्सरत्रयोषितस्य तु प्रायश्चित्ताभाव एव ; तद्भावापत्तिस्मृतेः । अत्र वक्तव्यशेषं स्मृतिरत्नाकरे सुगमम् । अपाङ्क्तेयान्ने विशेषमाह पैठीनसिः - 'कुनखी श्यावदन्तकः पित्रा विवदमानः स्त्रीजितः कुष्ठी पिशुनस्सोमविक्रयी वाणिज्यको ग्रामयाजकोऽभिशस्तो बृषल्यामभिजातः परिवित्तिः परिविविदानो दिधिषूपतिः पूनर्भूपुत्रश्चोरः काण्डपृष्ठस्सेवकश्चेत्यभोज्यान्ना अपाङ्क्तेया अश्राद्धार्हाः। एषां दत्वा च भुक्त्वा चाज्ञानात् त्रिरात्रम् अभ्यासे चान्द्रायण मिति । अज्ञानात् त्रिरात्रमिति स्मरणात् ज्ञानात्षड्रात्रमिति कल्प्यम्।

'विहितं यदकामानां कामात्तद्द्विगुणं भवेत्' इति मनुस्मृतेः ।

संस्कारान्नभोजने व्यासः -

'निर्वृत्ते चौळहोमे तु प्राङ्नामकरणात्तथा ।
चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ।।

अतोऽन्येषु च भुक्त्वान्नं संस्कारेषु द्विजोत्तमः ।
नियोगादुपवासेन शुध्येच्चानिन्द्यभोजने ।।

नारीप्रथमगर्भान्नं भुक्त्वा चान्द्रायणं चरेत् ।।'

इति । निन्द्यान्ने द्विगुणं कल्प्यम् । प्राजापत्याद्यशक्तौ विज्ञानेश्वरीये-

'प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् ।
पराके तप्तकृच्छ्रातिकृच्छ्रे तिस्रस्तु गाः स्मृता : ।।

प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्विचक्षणः ।
धेनोरभावे दातव्यं तन्मूल्यं वा न संशयः ।।

गवामभावे निष्कं स्यात्तदर्धं पाद एव वा ।
पादहीनं न कर्तव्यमिति वेदविदो विदुः।।' इति ।

कृच्छ्रेषु ब्राह्मणभोजनव्यवस्थोक्ता तत्रैव -

कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये
चत्वारिंशच्च तप्ते त्रिगुणनगुणिता विंशतिः स्यात्पराके ।
कृच्छ्रे सान्तापनाख्ये भवति षडधिका विंशतिस्सैव हीना
द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान् ॥'

इति ।

गोमता गौर्देया धनिना धनं धान्यवता विप्रभोजनम् । दरिद्रस्य वेदपारायणगायत्रीजपादिकमिति व्यवस्था ।

यत्किंचिदभ्यस्तमिदं समस्तं स्वार्थं परेषां गदितुं परं न ।
श्रुतावबोधोचितशीलशाली विराजते वैदिकसार्वभौमः॥

इत्यभक्ष्यभक्षण प्रायश्चित्त निर्णयः समाप्तः

# उत्सवनिर्णयः

साम्प्रतमुत्सवनिर्णयः प्रतन्यते । अत्र भृगुः -

देवोत्सवे प्रवृत्ते तु न मनुष्योत्सवो मतः ।
तस्मिन् ग्रामे न कर्तव्यः कुर्याच्चेत्स विनश्यति ।। इति ।

शंखः-

'देवोत्सवे प्रवृत्ते तु तत्रान्यदाभ्युदयिकं न करणीय' मिति ।

सुमन्तुः-

कृष्णोत्सवे प्रवृत्ते तु नान्यदेवोत्सवो मतः ।
उभौ च निष्फलौ स्याता मशुभानि [1]फलन्ति च ।।

क्रूरदेवोत्सवान्ते तु कारयेत्केशवोत्सवम् ।
तं दृष्ट्वा वर्धते संपन्नोचेत्सा तत्र हीयते ।। इति ।

पाद्मे-

1 फलन्ति → भवन्ति (पा)

देवतान्तरकल्याणे वर्तमाने तु वैष्णवम् ।
कुर्याद्देवोत्सवं नैव वैष्णवेऽन्योत्सवं क्वचित् ॥

उत्सवे देवदेवस्य ध्वजारोहणपूर्वके ।
प्रवृत्ते नैव यागादिश्चौलादिर्नैवसंस्क्रिया ॥

ग्रामाधिदेवायतने प्रवृत्तेऽप्युत्सवे पुनः ॥
कुर्यादेवान्तरे यागं चौलादिं चैव संस्क्रियाम् ॥

आरोपिते ध्वजे विष्णोरुत्सवार्थं विशेषतः ।
ग्रामान्तरं नैव गच्छेद्यदि गच्छेद्विनश्यति ॥

ज्योतिश्शास्त्रे -

एकमातृप्रसूतानामेकस्मिन्नेव वत्सरे ।
विवाहं मौञ्जिबन्धं च चूडाकर्म न कारयेत् ॥

एकमातृग्रहणाद्भिन्नमातृकेषु न दोषः । वत्सर ग्रहणात् मध्येतूत्सव-निषेधः । अयमर्थः- सोदराणामेकस्मिन्वर्षे विवाहादिकं तुल्योत्सवं न कुर्यादिति । तथा मिहिरः -

एकोदरप्रसूतानामेकस्मिन्नेव वत्सरे ।
विवाहो नैव कर्तव्यो गार्ग्यस्य वचनं यथा ॥

विवाहग्रहणं तुल्योत्सवोपलक्षणम्। वध्वा विवाहं कृत्वा मौञ्जीबन्धं न कुर्यात्। मौञ्जीबन्धं कृत्वा च चूडाकर्म न कारयेत्। तथा- 'मुण्डनान्मण्डनं कार्यं मण्डनान्न तु मुण्डनम्' इति। मण्डनं विवाहः। मुण्डनम् – उपनयनं चौलम्। मिहिरश्च -

न पुंविवाहोर्ध्वं मृतुत्रयेण विवाहकार्यं दुहितुः प्रकल्पयेत्।
न मण्डनाच्चापि हि मुण्डनं च स्यान्मुण्डनान्मण्डनमन्वगेव ॥

पुंविवाहग्रहणात् स्त्रीविवाहानन्तरं पुंविवाहः कार्य एव।

श्रीधरीये -

पुत्रस्य पाणिग्रहणात्परस्तान्न मासषट्कात्तनयाविवाहः।
तद्वद्विवाहादपि नोपनीतिस्तथोपनीतेः परतश्च चौलम्॥ इति।

अतुल्योत्सवत्वेनानियमे प्राप्ते पूर्वापरभावो नियम्यते।

तद्वदिति – मासषट्कादित्यर्थः अस्यापवादमाह मिहिरः -

एकमातृप्रसूतानां शुभद्वयमृतुत्रये।
न कुर्या द्वर्षभेदे तु त्रिमासादूर्ध्वमिष्यते ॥

फाल्गुने चैत्रमासे च पुत्रोद्वाहे[illegible]नायने।
भेदादब्दस्य कुर्वीत नर्तुत्रय विलंबनम् ॥ इति।

पुत्री विषये विशेषमाह स एव -

उद्वाह्य पुत्रीं तु पिता विदध्यात् पुत्र्यन्तरस्योद्वहनं न जातु ।
यावच्चतुर्थीदिनमंगळस्य समापनं तावदतो विदध्यात् ।।इति।

शेषहोमान्तमेव पुत्र्यन्तर विवाहनिषेध इत्यर्थः । अयं निषेधो यमळयोर्नास्ति ।

भ्रातृद्वये स्वसृयुगे स्वसृभ्रातृयुगे तथा ।
समानापि क्रिया कार्या मातृभेदे तथैव च ।।

इति समानोत्सवस्यापि समानकालकर्तव्यत्वस्मृतेस्तत्र प्रथमज एव ज्येष्ठः । तथा मनुः -

न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्य मुच्यते ।
जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् ।।

यमयोरेकगर्भे च जन्मतोज्येष्ठता मता । ज्योतिश्शास्त्रे च -

यमयोर्जननाज्ज्यैष्ठ्य माधानान्नेष्यते बुधैः ।
गर्भस्य कस्यचिल्लोके चिराज्जननदर्शनात् ।।

अतो महाप्रबलमनुस्मृतिविरोधात् पश्चाज्जातस्य ज्येष्ठत्वपर-वचनमनादरणीयम् । ज्योतिश्शास्त्रे -

एकस्मिंस्तु गृहे कुर्यादेकामेव शुभक्रियाम् ।
अनेकां यस्तु कुर्वीत स नाशमधिगच्छति ॥

द्विशोभनं त्वेकगृहे तु नेष्टं शुभं तु कुर्यान्नवतेः परस्तात् ।
आवश्यके शोभन उत्सवे च द्वार्भेद आचार्यविभेदने वा ।

इति द्वारस्याचार्यस्य वा विभेद इत्यर्थः । यमळव्यतिरिक्त-विषयमिदम् । तत्रैव -

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चमाब्दादधस्तूर्ध्वं गर्भिण्यामपि कारयेत् ।

आत्रेये -

जन्मभे जन्मदिवसे जन्ममासे शुभं त्यजेत् ।
ज्येष्ठमास्याद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि ॥
मौञ्ज्युद्वाहप्रतिष्ठादीन् केचित्तत्रापि कुर्वते ॥ इति ।

अतः पुंसुवनसंस्कृतगर्भस्यैव जन्ममासज्येष्ठमासयोरुत्सव निषेधः । तथा ज्योतिश्शास्त्रे -

मौञ्जीनिबन्ध व्रतकर्मणी च चूडाकृतिश्च प्रथमो विवाहः ।
स्नानं च पुंसः प्रथमस्य नेष्टं ज्येष्ठाख्यमासेऽपि च जन्ममासे ॥

इति प्रथमो विवाह इत्युक्तेः

द्विज्येष्ठं मध्यमं प्रोक्तमेकज्येष्ठं शुभावहम् ।
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् ।।

इत्युक्तनिषेधो द्वितीयविवाहे नास्तीत्यर्थः । तथा -

जन्ममासि न च जन्मभे तथा नैव जन्म दिवसेषु कारयेत् ।
आद्यगर्भदुहितुस्सुतस्य वा ज्येष्ठमासि नहि पाणिपीडनम् ।।

इति । श्रीधरीये -

जन्ममासे न कुर्वीत आद्यगर्भस्य शोभनम् ।
कनिष्ठपुत्रपुत्र्योस्तु शोभनं नारदोऽब्रवीत् ।।

देशे काले च पात्रे च संभवे तु मुनीश्वराः ।
कन्यादानं वयोधिक्ये जन्ममासे शुभं विदुः ।। इति ।

वृद्धगार्ग्यः -

मीने धनुषि सिंहे च स्थिते सप्ततुरंगमे ।
क्षौरमन्नं न कुर्वीत विवाहं मौञ्जिबन्धनम् ।।

आषाढः प्रोष्ठपान्माघो मार्गशीर्षस्तथैव च ।
चत्वारो दूषिता मासा वर्णसंस्कारकर्मणि ।। इति ।

गृह्यपरिशिष्टे- 'धर्म्येष्वेव विवाहेषु शुभकालपरीक्षणम्। नाधर्म्येषु' इति। अनेन 'सर्वे ऋतवो विवाहस्य' इत्युक्तकालोऽधर्म्यविवाह विषय इत्युक्तं भवति।

धर्म्येष्वपि विवाहेषु चौळादिषु च कर्मसु।
पौषकार्त्तिकमीनाख्या वैशाखो मूलमासकः॥

उत्तमौ मेषसिंहाख्यौ मासौ तौळिश्च मध्यमः।
अधमाश्शेषमासास्स्युर्विवाहं वर्जयेत्तदा॥ इति॥

मूलमासः चैत्रमासः।

तृतीयेऽब्दे त्रियंशोने पञ्चमे चोत्तरायणे।
गर्भाद्वा जन्मतो वा स्यान्न षष्ठे जन्मतः शिशोः॥

'गर्भाष्टमेषु ब्राह्मणमुपनयीत' इत्याद्युक्तकालस्य मलादिदोष-दुष्टत्वे सति न तत्रोत्सवः कार्यः। गार्ग्यः -

यदा रवेर्मण्डलमेति काव्यो विनष्टतेजा गुरुरप्यथैवम्।
कालस्स दीक्षाव्रततीर्थयात्रा विवाहयज्ञोत्सवनाशहेतुः॥इति

वृद्धमनुः -

अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च।

मांगल्यमभिषेकश्च मलमासे विवर्जयेत् ॥
बाले वा यदि वा वृद्धे शुक्रे चास्तंगते गुरौ ।
मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥ इति ।

देवदर्शनमपूर्वविषयम् । गार्ग्य : -

नामान्नप्राशने चौळं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्मापि काम्यं वृषविसर्जनम् ॥

अस्तगे च गुरौ शुक्रे वृद्धे बाले मलिम्लुचे ।
उद्द्यापनमुपारम्भं व्रतानां नैव कारयेत् ॥ इति ।

अत्र व्यवस्थामाह स एव -

नामकर्म च जातेष्टिं यथाकालं समाचरेत् ।
अतिपाते तु कुर्वीत प्रशस्ते मासि पुण्यभे ॥ इति ।

मरीचिः -

गृहप्रवेशगोदानस्नानाश्रममहोत्सवान् ।
न कुर्यान्मलमासेऽपि गुरौ शुक्रे तथास्तगे ॥ इति ।

स्नानं समावर्तनम् । गार्ग्यः -

अनादिदेवतां द्रष्टुमशुचिर्नष्टभार्गवे ।
मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥

अनादीत्यपूर्वदेवतादर्शनमेवोच्यते, अनावृत्तम्-अपूर्वम् 'जन्मनोधितृतीये वर्षे' इति गर्भचतुर्थाब्दश्चौळकालः सिद्धः 'पञ्चमेवोत्तरायणे' इति जन्मचतुर्थस्सिद्धः। एवं गर्भतो जन्मतश्च चतुर्थाब्दस्य चौळकालत्वे सिद्धेऽपि चौळे तृतीयोऽब्द पञ्चमश्चोक्तः। न क्वचिदपि चतुर्थोऽब्द इति वादो भ्रान्तिमूल इति सिद्धम्। यथा 'चतुर्थी मुद्वहेत्' इति वचनस्य विजातीय विषयस्यै सजातिविषयत्वभ्रान्तिः। एवमिह विवेक्तव्यम् - किं सपिण्डापि विवाह्या उत न विवाह्येति। आद्ये नोत्तरम्। सपिण्डा सगोत्र समानप्रवराविवाहस्य पातित्यहेतुत्वस्मरणेऽपि शास्त्रमुल्लंघ्य स्वेच्छया विवाहे शास्त्रानवतारात्। तथापस्तंबः - यत्र प्रीत्युपलब्धितः प्रवृत्ति र्न तत्र शास्त्रमस्ति, तदनुवर्तमानो नरका राध्यति इति। द्वितीये च नोत्तरम्। अविवादादेवेत्यलम्। ननु

श्राद्धजातकनामानि ये च संस्कारसंज्ञिताः।
मलिम्लुचेऽपि कर्तव्याः काम्या इष्टीर्विवर्जयेत्॥

इति वचनात् कथं विवाहादिसंस्कारा मास दोषे न कार्या इ चेन्न -पूर्वोक्तगार्ग्यादिवचनविरोधात्पिण्डोदकादिपरत्वा

मलिम्लुचाह्वये मासे विपद्येत यदि द्विजः ।
तस्मिन्नपि च कर्तव्याः पिण्डदानोदकक्रियाः ।

जातकर्म च पुंसूतिं सीमन्तोन्नयनव्रतम् ।
मलिम्लुचेपि कुर्वीत निमित्तं यदि जायते ।। इति ।

अतो नित्यत्वेऽपि जातकाद्यन्नान्ता एव संस्काराः कर्तव्याः । न चौलादयः । तथाऽऽत्रेये -

मासप्रोक्तेषु कार्येषु मूढत्वं जीवशुक्रयोः ।
अधिमासादिदोषाश्च न स्युः कालविधेर्बलात् ।। इति ।

सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि षष्टेऽष्टमे वा सीमन्तः । षष्ठेऽन्नप्राशनं मासि इत्यादिभिर्मासप्रोक्तानां पुंसवनसीमन्त जातकर्मनामान्नप्राशनसंस्काराणामेव मासदोषेऽपि कार्यत्वं सिद्धम् । एवं पुनरुत्सवेऽपि मलादि मासस्त्याज्यः । आत्रेये - 'अशुभर्क्षे कृतोद्वाहः पुनस्तामुद्वहेच्छुभे' इति । बोधायनः - 'अथ चेदौपासनारंभात्प्राग्ज्वलनस्य नाशः पुनर्विवाहं कुर्वीत । अथ पुनर्विवाहेष्वेतानुत्सीदन्ति प्रतोदमिषुंवासः पूर्वं भोजनं त्रिरात्रव्रत-मित्यादि विवाहशेषान् वर्जयेत्' इति । संग्रहे च -

होमादौपासनारम्भादनले शान्तिमागते ।
युगाद्यवान्तरं कर्मशेषं कृत्वा समापयेत् ।।

शेषं शेषहोमान्तम् । तथाऽन्यत्रापि -

प्राक्चेदौपासनारंभाद्विवाहाग्निर्विनश्यति ।
गृहप्रवेशनादर्वाग्द्वादशाहव्यतिक्रमे ।।
विवाहो नैव सिध्येत पुन वृणीत कन्यकाम् ।।

अस्यार्थः -

प्रातर्होमस्संगवान्तकालस्स्यादुदिते रवौ ।
सायमस्तमिते होमकालस्स्यान्नवनाडिकाः ।।

इत्युक्ते काले आग्नेयस्थालीपाकात्परम् औपासनहोमः प्रारब्धश्चेत् 'अनुगतोमन्थ्यः' इत्युक्तमेव कार्यम् । ततोऽर्वागग्निनाशे पुनर्विवाहः कार्य एव। एवं स्वग्रामस्यातिदूरत्वेन वा केनचिद्विघ्नेन वा वध्वा सह निष्क्रान्तस्य मध्ये द्वादशाहव्यतिक्रमे च पुनर्विवाहः कार्य इति । वामनश्च-

लेखाहोमात्पुरा वह्ने विंनाशे पुनरुद्वहेत् ।
चतुर्थी होमकरणात्प्रागग्न्यनुगमे सति ।।

बोधायनः -

अमत्या वारुणीं पीत्वा प्राश्य विण्मूत्रमेव वा ।
ब्राह्मणः क्षत्रियो वैश्यः पुनस्संस्कारमर्हति ।। इति ।

व्यासः-

सिंधुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्ग वङ्गकळिङ्गांश्च गत्वा संस्कारमर्हति ।।

प्रत्यन्तवासिनः - चण्डालप्रदेशाः । चन्द्रिकायां च -

सिंधुसौवीरसौराष्ट्रमावन्त्यं दक्षिणापथम् ।
तीर्थयात्रां विना गत्वा पुनस्संस्कारमर्हति । इति ।

बोधायनः - 'अतोपनीतस्य व्रता....' इत्युपक्रम्य आद्यश्राद्धा-शौचान्नमधुमांसभोजनादीनि परिगणय्य 'एतेषु पुनस्संस्कारो विद्यते' इति । तत्काले वर्ज्यमाह स एव -

वपनं मेखला दण्डो भैक्षचर्या व्रतानि च ।
निवर्तन्ते द्विजातीनां पुनस्संस्कारकर्मणि ।।

सर्वमन्यत्तु कुर्वीत यथाशास्त्रं यथाविधि ।
कालश्चैव वसन्तादिर्न निरीक्ष्यः कदाचन ।।

मासदोषस्तु निरीक्ष्य एव ।

मलिम्लुचैस्समाक्रान्तं मासं संक्रान्तिवर्जितम् ।
मलिम्लुचं विजानीयाद् गर्हितं सर्वकर्मसु ॥

इत्यादिस्मृतिभ्यः। विवाहकाले कन्यारजःप्रादुर्भावे,अखण्डादर्शे-

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुस्समागच्छेत्कथं कुर्वन्ति याज्ञिकाः ॥

यजुः पवित्रैरब्लिंगैस्सावित्रीपूतवारिभिः ।
अनेन चानुवाकेन पवमानस्सुवर्जनः ॥

स्नापयित्वा च विद्वद्भिरन्यवस्त्रामलंकृताम् ।
पूर्णाहुत्या च मिन्दाभ्यां हुत्वानुज्ञाप्य तान्सतः ॥

तया सह ततस्तन्त्रशेषं कार्यं समापयेत् ।
प्रधानहोमनिर्वृत्तौ मलवद्वाससी यदि ।
त्रियहे पर्यपेते तु तन्त्रशेषं समापयेत् ॥ इति ।

किञ्च वयोधिकत्वे कालान्तरे दोषशंकायां वा कन्याकुमारयो-रुपनयनं पित्राद्याशौचसंभवेऽपि तत्काले कारयितव्यम् ।'अत्र ह्यधिकारः शास्त्रैर्भवति' इत्युपनयनोत्तरकालमेव तयोश्शास्त्रोक्त-

कर्माधिकारस्मरणेन आशौचाभावात् । 'तस्मादभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्' इति समाहितेन आशौचरहितेनान्येन कारयितव्यत्वस्मरणात् ।

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

कन्यायास्तु पिता माता भ्राता मातुल एव च ।
पितुर्भ्राता गुरुर्वापि प्रदातुं प्रभुतां गताः ॥

इति पितामहादीनां कन्याप्रदानाधिकारस्मरणाच्च । यथा कालातिक्रमो न भवति तथा पित्राद्यनुमत्यान्येनान्यगृहेऽन्यदीयैर्द्रव्यैरुपनयनं कारयितव्यमेव । एवमेवाखण्डादर्शे च व्याख्यातम् । वृद्धगार्ग्यः कर्ममध्ये पुनराशौचसंभवे कार्यमाह-

ज्येष्ठस्य तु क्रतोर्मध्ये मातापित्रोर्मृतिर्यदि ।
दीक्षारूपं निधायात्र संस्कुर्यात्पितरौ हि सः ॥ इति ।

स्मृत्यन्तरे -

दीक्षितोऽप्येकपुत्रश्चेन्मातापित्रोर्मृतिर्यदि ।
संस्कृत्य शालामागत्य यज्ञशेषं समापयेत् ॥

एकपुत्रश्चेदिति पुत्रान्तरसद्भावे स एव पितरौ संस्कुर्यादिति भाव:

प्रतिष्ठादिषु कृत्येषु यस्मिन् ग्रामे मृतिर्भवेत् ।
शीघ्रं बहिश्शवं नीत्वा कर्मशेषं समापयेत् ॥

आदिशब्देन चौळोपनयनादिग्रहणम् । नीत्वा - मध्ये विलंब्य शवे निर्हृतेऽपि कर्मशेषं समापयेदित्यर्थ: । विज्ञानेश्वरीये -

विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके ।
शेषमन्नं परैर्देयं दातृन्भोक्तृंश्च न स्पृशेत् ॥

परै: - आशौचरहितै: । न स्पृशेत् - आशौचिजन इति शेष: । एवं विवाहादि मध्ये आशौच संभवे दक्ष: -

यज्ञकाले विवाहेषु देवयागे च निष्कृतौ ।
हूयमाने तथैवाग्नौ नाशौचं न च सूतकम् ॥ इति ।

विवाहेष्विति बहुवचनं प्रधानहोमादिशेषहोमान्त कर्माभिप्रायम् । तथा ब्राह्मे पुराणे -

विवाहयिष्णो: कन्याया लाजहोमादिकर्मणि ।
प्रायश्चित्तपरस्यापि स्वाध्यायनिरतस्य च ॥ इति ।

स्थालीपाकशेषहोमा उच्यन्ते । याज्ञवलक्यश्च -

दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ।। इति ।

स्मृत्यन्तरे च -

यज्ञे संभृतसंभारे विवाहे श्राद्धकर्मणि ।
तथा चौळादिसंस्कारे प्रारब्धे सद्य इष्यते । इति ।

स्मृतिसारसमुच्चये च -

आशौचं कर्ममध्ये तु शावं सूतकमेव वा ।
आपतेद्यदि सर्वेषां सद्यः शौचं विधीयते ।।
मातापित्रोश्च मरणे पुत्रस्य मरणे तथा । इति ।

अत्र स्मृत्यर्थसारे तावदाशौचाभावे व्यवस्थोक्ता -

आरंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ।। इति ।

तत्पूर्वेद्युरकृत्वा चेत् कुर्याच्छ्वोऽभ्युदयं ततः ।
कुर्यात्कर्ता तदा तत्र सद्यः कर्मेति कीर्त्यते ।।

इति वचनात्पूर्वेद्युरभ्युदये तदाद्याशौचाभावः । उत्सवदिने

प्रातरभ्युदये तत्प्रभृति तदभावः। 'अत्रह्यधिकारः शास्त्रैर्भवति', 'पूर्वं संकल्पितं द्रव्यं दीयमानं न दुष्यति' इति स्मरणात्। कन्याद्रव्ययोराशौचाभावाद् गृहान्तरे तैरेव द्रव्यैर्विवाहकरणं निर्व्याकुलम्। प्रातरभ्युदयाकरणेऽपीति व्यवस्थापनीयम्। वरस्य तु तस्मिन्नब्दे ज्ञातिमृतौ समावृत्तस्य

'अदिष्टी नोदकं दद्यादाव्रतस्य समापनात्।
समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेत्॥'

इत्यतिक्रान्ताशौचस्मरणात् त्रिरात्राद्यतिक्रान्ताशौचे तत्कालीन ज्ञात्याशौचे च न विवाह इति द्रष्टव्यम्। तथा सपिण्डीकरणाकरणे नोत्सवः कार्यः।

यावत्सपिण्डीकरणं तावद् वृद्ध्यादि नेष्यते।
तत्सोदरस्य पुत्रस्य न त्वन्यस्य सगोत्रिणः॥ इति स्मृतेः।

इदमुपलक्षणम्।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सपिण्डीकरणं कृत्वा कुर्यादभ्युदयं ततः'॥ इति वचनात्।

तस्मात् 'पुत्रः पौत्रश्च तत्पुत्रः' इत्यादिभिर्यस्मिन्कर्तृत्वं पर्यवसितं

सपिण्डीकरणश्राद्धमकृत्वा शुभकर्मकृत् ।
ध्रुवमाप्नोति नरकं सपिण्डानां मृतौ क्रमात् ।

अकृत्वा प्रेतकार्याणि नित्यनैमित्तिकान्यपि ।
न कुर्यात्तावदाशौचं यावत्प्रेतत्वमोक्षणम् ॥

प्रेतत्वमोक्षणम्–सपिण्डीकरणम् ।

अकृते प्रेतसंस्कारे न कुर्यादात्मनः शुभम् ।
कुर्यादेव शुभं कर्म मुख्यकर्तुश्च संनिधौ ॥

इत्यादि स्मृतिभ्यः । अत एव शाट्यायनिः-

प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्ता नान्दीमुखे द्विजः ॥ इति ।

अतः शुभागमे तदूर्ध्वमासिकान्यपकृष्य कर्ता कुर्यात् । तथा द्वादशाहादावकृतं सापिण्ड्यं च मासिकैस्सह मृताहे कुर्यात् । शुभागमस्यापि सापिण्ड्यकालत्वात् । द्वादशाहादावपकृष्य-कृतान्यपि पुनरपकृष्य कुर्यात् । तथा शाट्यायनिः-

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनस्तान्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥ इति ।

निषेधमाह कात्यायनः -

निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत् ।
अयातयाममरणं भवेदिति विनिश्चितम् ।। इति ।

तदेवम् -

प्रेतसंस्कारकार्याणि यानि श्राद्धानि षोडश ।
यथाकाले तु कार्याणि नान्यथा मुच्यते ततः ।।

इति वचनं वृद्धिव्यतिरेकेणापकृष्य कृतमासिकानां स्वस्वकाले पुनः करणपरम् । अतो वृद्धावपकृष्य कृतानां न पुनःकरणम् । निषेधात् । एवं मासिकापकर्षो मासिककर्तुरेवोत्सवे । 'कर्ता नान्दीमुखे' इति स्मृतेः । पुत्रान्तरस्य मासिककर्तृत्वाभावेऽपि केचिदत्र भ्रात्राद्युत्सवेऽपि मासिकान्यपकृष्य कुर्वन्ति तत्किल शब्द शास्त्रानभिज्ञत्वविजृंभितम् । 'निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्' इति वृद्धितन्त्रमासिकयोस्समानकर्तृकत्वावगमात् । अतो न भ्रात्राद्युत्सवे मासिकापकर्षः । भिन्नकर्तृत्वात्तयोः । अन्यथा 'स्नात्वा भुञ्जीत' इत्येवमादावन्येन स्नानादिकरणेऽपि तदकृत्वा-न्यस्य भोजनादिप्रसक्तेः 'भुक्त्वा चान्द्रायणंचरेत्' इत्यादा -

अनुशासन विरोधात् । ग्रामयाजकस्य ग्रामे कस्यचिदुत्सवेऽपि स्वपितृमासिकापकर्षप्रसक्तेश्च । एवं शब्दशक्त्यैवार्थसिद्धे-र्मासिककर्तु रेवोत्सवे मासिकापकर्षो न भ्रात्राद्युत्सव इति शेमुषी विशेषजुषां विदुषां सुव्यक्तमित्यास्तां तावत् । एवं मासिकापकर्षो नियतोत्सव विषयः ; विवाहादिरनियतः, पुंसुवनाद्युत्सवो नियतः तस्यावश्यकर्तव्यत्वात् । 'निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते अग्निहोत्रमतिथयः' इत्यापस्तंबेन विवाहानन्तरमेवाग्निहोत्रादेर्नैय-मिकत्वस्मरणात् । विवाहस्य तु रागाधीनत्वाच्च विवाहश्चानियतः। 'स्नात्वा समुद्वहेत्कन्याम्' इति समावर्तनविवाहयोरविना-भावावगमात्,

'स्नातस्तूपयमादर्वाङ्मृतो नर्च्छति सद्गतिम् ।
तस्मादासन्नवैवाह्य स्स्नानकर्म समाचरेत् ।।'

इतिवचनाच्च विवाहाभावे स्नानं चानियतम् । वेदव्रतानि तु वेदांगत्वान्नियतानि ब्रह्मचारिभिरवश्यकार्याणि ।

वेदव्रतादिकानादौ प्रारभेदुत्तरायणे ।
यावत्संवत्सरान्तं तु तावच्चरणमिष्यते ।।

इति श्रीधरीयवचनात्तेषां वेदांगत्वं सुव्यक्तम् । अत एव

विवाहानपेक्षत्वेऽप्यधीतवेदेन तानि कार्याणि। अनधीतस्य तु न नियमः। वेदाध्ययनाभावादुपाकर्मवत्।

अधीतवेदविद्याना मुपाकर्म द्विजन्मनाम्।
अध्यायांगमिदं प्रोक्तमिति होवाच भार्गवः ॥ इति।

अतः पुंसुवनादिकमेवावश्यकार्यम्। तदुक्तम् -'जातकर्म च पुंसूतिः' इति। 'नामकर्म च जातेष्टिम्' इति च। व्रतादेशव्रताना-मवश्यकार्यत्वेऽपि मले न कार्याणि। तच्चोक्तम् -वेदव्रतवृषोत्सर्ग चूडाकरणमेखलाः इति। श्रीधरीये च-

अमा च पूर्णिमा चैव यन्मासे युगळं भवेत्।
यस्मिन्न दृश्यते मासि चौळमौञ्ज्यादि वर्जयेत्॥

एकमासे द्वये पूर्णे दर्शस्यैकस्य संभवे।
अग्निज्वालेति विख्याता शुभकर्मविनाशिनी॥ इति।

'विवाहयज्ञोत्सवनाशहेतुः' इति च। देवलश्च-

पितरौ प्रमितौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि पित्र्यं च यावत्पूर्णो न वत्सरः॥

अग्न्याधानादिकं च प्रथमाब्दे न कार्यम्। तदाह स एव-

स्नानं चैव महादानं स्वाध्यायश्चाग्नितर्पणम् ।
प्रथमेऽब्दे न कर्तव्यं महागुरुनिपातने ॥

एवं पितृमृताब्दे विवाहादिनिषेधात् तदर्थं न मासिकापकर्षः । एवं च स्वस्यैवावश्यकार्योत्सवमन्तरेण मासिकापकर्षे प्रत्यवायश्च प्रसजेत् । तथा शाट्यायनिः -

अन्तरेणैव यो वृद्धिं मासिकान्यपकर्षति ।
स श्राद्धी नरके घोरे पितृभिस्सह मज्जति ॥

एवमप्यज्ञानात्तदपकर्षेऽप्यकालेकृतस्याकृतत्वात् 'यथाकाले तु कार्याणि नान्यथा मुच्यते ततः', 'अकाले चेत् कृतं कर्म कालं प्राप्य पुनः क्रिया' इत्यादि वचनाच्च यथाकाले पुनरपि कार्याणि । एवं भ्रात्राद्युत्सवे स्वस्य च विवाहोत्सवार्थं मासिकापकर्षो नास्तीति निरवद्योऽयं निर्णय इत्यलम् । अकृतविवाहे विदेशनिष्ठे ज्येष्ठे कनिष्ठस्य विवाहावस्थायां व्यवस्थामाह शंखः -

द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोगतः ।
न्याय्यं प्रतीक्षितुं भ्रात्रा श्रूयमाणः पुनः पुनः ॥

वृद्धवसिष्ठः - 'अष्टौ द्वादशवर्षाणि वा ज्येष्ठभ्रातरमनिविष्ट - मवीक्षमाणः प्रायश्चित्तीभवति'। अनिविष्टम् - अकृत

विवाहाग्निहोत्रम् ' इति गौतमः । 'नष्टे भर्तरी' त्युपक्रम्य द्वादशवर्षाणि ब्राह्मणस्य विद्यासंबन्धश्चेति । पत्न्या पत्युः प्रतीक्षणनियममाह - 'भ्रातरि चैवं ज्यायसि कनीयान् कन्याग्न्याधेयेषु' इति। एवं च द्वादशाब्दादूर्ध्वं न तत्प्रतीक्षणम्। किंतु विवाहः कार्यः । तथा स्मृत्यन्तरे -

द्वादशाब्दात्तु नायाति देशांतरगतस्थितः ।
विवाहादीनि कर्माणि कनिष्ठस्तु तदाचरेत् ॥

देशान्तरगते ज्येष्ठे द्वादशाब्दान्निरीक्ष्य तु ।
पश्चात्कनिष्ठो विधिवत्कुर्याद्वै दारसंग्रहम् ॥ इति ।

एवं प्रतीक्षणं पतितादिव्यतिरिक्तविषयम् । तथा चन्द्रिकायाम् -

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा ।
राजयक्ष्मामयावी च न न्याय्यस्स्यात्प्रतीक्षितुम् ॥

शातातपः -

क्लीबे देशान्तरस्थे च पतिते भिक्षुके तथा ।
जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥

देशान्तरस्थक्लीबैकवृषणानसहोदरान्[1] ।
वेश्यादिसक्तपतितशूद्रतुल्यातिरोगिणः ॥

जडमूकान्धबधिरकुब्जवामनखेटकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥

धनवृद्धिप्रसक्तांश्च कामतो कार्यिणस्तथा ।
कुहकोन्मत्तचोरांश्च परिविन्दन्न दुष्यति ॥

खेटक :- भग्नपदद्वयः । धर्मसारे -

षण्डान्धबधिरस्तब्ध जडगद्गद पङ्गुषु ।
कुब्ज वामनरोगार्त कुष्ठ्यंगविकलादिषु ॥

मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तपुंस्त्वेषु चैतेषु संस्कार्यत्वं यथोचितम् ॥

मूकोन्मत्तौ न संस्कार्याविति केचिद्वदन्ति हि ।
कर्मस्वनधिकारित्वात्पातित्यं नास्ति यत्तयोः ॥

स्मृत्यन्तरे -

कुब्जवामनखञ्जेषु गद्गदेषु जडेषु च ।
योगशास्त्राभियुक्तेषु न दोषः परिवेदने ॥

1.-णानसहोदरान् → -णांश्च सहोदरान् (पा)

धर्मसारे च -

षण्डान्धबधिरस्तब्धजडगद्गदपङ्गुषु ।
यतिनैष्ठिककुब्जेषु न दोषः परिवेदने ॥

पतितादिव्यतिरिक्तमत्तादीनां रंभादिविवाहं कारयित्वानुजो विवहेत् । तथा मनुः -

मत्तोन्मत्तजडक्लीब पतितानां द्विजन्मनाम् ।
नोद्वाहो न च संस्कारो नाशौचं नोदकक्रिया ॥

रंभाविवाहः कर्तव्यस्तदलाभेऽर्क शाखया ।
विवाहं मनुजाः कुर्युरित्येवं मनुरब्रवीत् ॥ इति ।

तस्मादीदृग्विषये कनिष्ठस्य न कालप्रतीक्षणं न वा परिवेदनदोष-गन्धः ; एवमपवादशतसद्भावादित्यलम् । एवं स्मृतिषूपनयनादिषु परिवेदनदोषस्मरणात् कनिष्ठस्य जातकादिचौलान्तसंस्कारा यथाकालं कर्तव्या इति सिद्धम् । शंखः -

नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य न च कन्या विरूपिका ॥

अत्राखण्डादर्शकारः - 'दत्तस्य ज्येष्ठानुमत्या कनिष्ठस्याधाने नाग्नयः परिविन्दन्ति तथा ज्येष्ठे अनुपनीते महारोगग्रस्ते देशान्तरस्थे

वा अविज्ञाते तथा पूर्वोक्तविषये कनिष्ठे दत्ते उपनीते न वेदाः परिविन्दन्ति तथा ज्येष्ठेऽकृतव्रते कनिष्ठेन तपसि चीर्णेन तपांसि न परिविन्दन्ति तथा विरूपिका वैकल्ययुक्ता कन्या अनुजाया विवाहविघ्नहेतुर्न भवति' इति। वृद्धवसिष्ठः -

अग्रजस्तु यदानग्निरादध्यादनुजः कथम्।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि॥

ब्रह्माण्डपुराणे -

यज्ञकर्मणि चोद्वाहे ज्येष्ठे सति कनीयसा।
ज्येष्ठानुमत्या कर्तव्ये सति तत्कर्म शोभनम्॥

एवं ज्येष्ठानुमत्यैव दत्तोऽग्निहोत्रादिकं कुर्यात्। इदमदत्तविषयं किं न स्यात् - न स्यात्। परिवेदनदोषस्मरणात्। तथा यमः -

ज्येष्ठे निविष्टे भार्या तु कनिष्ठस्य विधीयते।
निविष्टश्चानिविष्टे तु परिवेत्ता स उच्यते॥

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः।

स्मृत्यन्तरे च -

ज्येष्ठायां यद्यनूढायामुह्यते ह्यनुजा तु या।
सैवाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता॥

आपस्तंबः – 'अग्रदिधिषु दिधिषूपति पर्याहित परीष्टि परिवित्त परिविन्न परिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान् गरीयान्' इत्युक्त्वा 'पतनीय वृत्तिस्तु शुचिकरणाद् द्वादशमासान् द्वादशार्धमासान्' इत्यादिना पतनीयवृत्तिं स्मरति। अत्र विज्ञानेश्वरः – 'परिवित्ते च वसिष्ठेन प्रायश्चित्त विशेषो नोक्तः। तत्रानापदि मानवमुपपातकसाधारणप्राप्तं त्रैमासिकम्। आपदि तु याज्ञवल्क्यीयं व्रतचतुष्टयं शक्त्यपेक्षया योज्यम्। तथा परिवेत्तरि च वसिष्ठेन प्रायश्चित्तविशेष उक्तः। 'परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्निविशेत्तां चैवोपयच्छेत' इति। परि - विविदानः परिवेत्तोच्यते। असौ कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै ज्येष्ठाय स्वां स्वोढां दत्वा ब्रह्मचर्याहृतभैक्षवद् गुरुपरिभव-परिहारार्थं निवेद्य पुनरुद्वहेत्। तामेव स्वोढां ज्येष्ठाय निवेदितां तेन चानुज्ञाता-मुपयच्छेत। यत्तु हारीतेनोक्तम् 'ज्येष्ठेऽनिविष्टे कनीयान् निविशमानः परिवेत्ता भवति परिवित्तिर्ज्येष्ठः परिवेदिनी

संवत्सरं प्राजापत्येन कृच्छ्रेण पावयेयुः' इति ; यदपि शंखेनोक्तम्-
'परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षं चरेयाताम् ।'
इति; तदुभयमपि कामकारेण कन्यापित्राद्यननुज्ञातोद्वाहविषयं प्रायश्चित्तस्य गुरुत्वात् । यदा पुनः कामतः कन्यां पित्रादिदत्तामेव परिणयति तदा मानवोक्तं त्रैमासिकं पूर्वोक्तौ कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्निविशेतेति तत्राग्रदिधिषुः प्राजापत्य कृच्छ्रं कृत्वा तामेव ज्येष्ठां पश्चादन्येनोढामुद्वहेत् । दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढां ज्येष्ठां कनीयस्याः पूर्वोढ्रे दत्वा तां कन्या मुद्वहेत् इति । पराशरः -

परिवित्तिः परिवेत्ता यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ।।

अतो ज्येष्ठानुमत्या दाराग्निहोत्रकरणस्मरणं दत्तविषयमेव ।

'भगिनीषु कनिष्ठस्य न दोषः परिवेदने ।
भगिनीषु कनीयस्या दोषोऽस्तिपरिवेदने ।।
नत्वेवाधानयोगेषु परतन्त्रा यतस्सदा ।'

इति कवषोक्तभर्तृपरतन्त्रप्रत्तावद्दत्तस्यापि,

'गोत्रान्तरं प्रविष्टानां दायमाशौचमेव च।
ज्ञातित्वं च निवर्तन्ते तत्कुले सर्वमिष्यते ॥

इति ग्रहीतृगोत्रत्वादिस्मरणात्तद्विषयत्वं स्पष्टम्। तथा स्मृत्यन्तरे -

'दत्तस्य परिवेत्तृत्वमाशौचं दायमेव च।
ग्रहीतृगोत्रात्संग्राह्यं श्रौतस्मार्तादिकं तथा ॥

अतः -

ज्येष्ठश्चेद्दीर्घरोगी स्यात्पतितो वा विदेशगः।
षण्डो वा प्रव्रजेत्तस्य कनिष्ठो दारमर्हति ॥

इत्याद्युक्तपातित्यादिदोष संभव एव कनिष्ठविवाहो निर्व्याकुलो नान्यथेति निर्णयः। किञ्च -

'ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत्।
अनुज्ञातस्तु कुर्वीत शंखस्य वचनं यथा ॥

पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत् ॥
अग्निहोत्रेऽधिकारोऽस्ति शंखस्य वचनं यथा।'

इत्यादिशंखसुमन्त्वादिवचनं च दत्तविषयमिति केचित्।

अग्रजस्तु यदानग्निरादध्या दनुजः कथम्।

सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

इति वृद्धवसिष्ठादिवचनादाधानमात्रस्य दोषाभावपरमित्यन्ये । इज्यया-पञ्च महायज्ञेन । दाराग्निहोत्रविषये पर्याहित परीष्टीत्यादि वचनविरोधान्न तद्विषयमित्यपरे ।

पिता पितामहो यस्य न व्रती नाग्निमान्कचित् ।
तपोग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

इत्युशनस्स्मरणादीदृशविषयमित्येके । यदत्र युक्तं तद्ग्राह्यम् ।

अंगिराः -

एकमातृप्रसूतानां भ्रातृणां परिवेदने ।
दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नमातृषु ॥

यमः -

पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिविन्दतः ॥

वृद्धयाज्ञवल्क्यः -

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते ।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते ॥

प्रथममाधेयमौपासनाग्निमनाधाय गार्हपत्याद्यग्न्याधाने परिवेत्ता भवतीति व्याख्यानम्। अत्र बोधायनः - 'अन्धजडबधिरमूकानां संस्कारं व्याख्यास्यामः। क्रतुषु यथाकामी स्यात् पुण्ये नक्षत्रे ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयित्वा केशानोप्य स्नातं कुमारं शुद्धं यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयत्यथ देवयजनप्रभृत्याग्निमुखान् कृत्वा याज्ञिकीं समिधमाज्येनाक्त्वा तूष्णीमभ्याधापयति, तूष्णीमश्मानमास्थापयति, यथालाभं तूष्णीं मेखलाममन्त्रवद्ग्रन्थिं करोति, तूष्णी मजिनं प्रयच्छति, तूष्णीं दण्डं प्रयच्छति, याज्ञिकवृक्षस्य न नाम पृच्छति, अथैनं दक्षिणे हस्ते गृह्णाति, 'यस्मिन्भूतं च भव्यं चे' त्यथैनं परिदधाति, देवेभ्यस्त्वेत्यथैनमुनपयति, देवस्यत्वेति सर्वनामग्रहणवर्जमाचार्यएव पक्त्वा जुहोति, तूष्णीं सर्वान्मन्त्रानाचर्य एव जपेदित्येके। षण्डजडक्लीबहीनाधिक[illegible]स्मारिश्वित्रिणां दीर्घरोगिणां चैतेन व्याख्याता इत्येके'। इति। किञ्च 'सीमन्तोन्नयने प्रथमे गर्भे चतुर्थेमासि' इति सीमन्तस्य चतुर्थ मास कार्यत्वस्मृतेः, 'सवनं स्पन्दनात्पुरा' इति पुंसुवनस्य प्रसवात्प्राक्कार्यत्व-

चतुर्थमासात्प्रागेव गर्भस्पन्दनस्मरणात् । तथा बैजावापः - 'मासि द्वितीये तृतीये वा पुरा स्पन्दते गर्भः' इति । अतो जठरे गर्भचलनमेव स्पन्दनं न प्रसवः । श्रीधरीये -

प्रथमं सुवनं कार्यं सार्धं सीमन्तकर्मणा ।
सीमन्तोन्नयनस्योक्तमासवारर्क्षराशिषु ॥

एवं सहकर्तव्यत्वस्मरणाच्चतुर्थमासे सीमन्तोन्नयनं कथमिति चेन्न- 'गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा न प्रसवः' इति शंखस्मरणाच्च; चतुर्थमासात्प्रागपि तत्सहकरणे न विरोधः । 'यावद्वा न प्रसवः' इति दैवान्तरितोभयविषयम् । 'गर्भलक्षणं च तृतीये मासि संभवति' इति 'पुंसुवनं व्यक्ते गर्भे' इति स्मृत्या च न विरोधः । अतः कालैक्येऽपि प्रथमं पुंसुवनं कार्य मिति नियमान्न व्यत्ययप्रसंगः । इदं च न प्रतिगर्भं कार्यम् - 'प्रथमे गर्भे' इति- स्मृतेः । अत्र हारीतः -

'सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वस्संस्कृतो भवेत् ॥

सीमन्तग्रहणं पुंसुवनस्याप्युपलक्षणं साहचर्यादिति ।अत एव सामान्येनाह देवलः -

'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता' इति। अनेन गर्भिण्या गर्भस्य चायं संस्कार इति न भ्रमितव्यम्। 'गर्भाधान पुंसुवन सीमन्तोन्नयन जातकर्म नामकरणान्नप्राशन चौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानम्' इति गौतमेन जातकर्मादिवन्निषेकादीनामपि जातसंस्कारत्व-स्मरणादुपनयनादिसहपाठेन गर्भसंस्कारत्वावगमाच्च। अत्र चन्द्रिकायाम् -

गर्भिण्या भर्तरि प्रेते तत्पिता भ्रातरस्तथा।
अन्ये वा बान्धवाः कुर्यु स्तस्याः पुंसुवनादिकम्॥

तत्पिता भर्तृपिता। भ्रातरो बान्धवाश्च तस्यैव। तत्रैव-

भार्याद्वयं यस्य भवेत्तु तस्य संसृष्टवह्नौ सवनं प्रकुर्यात्।
तत्रैव सीमन्तमपि प्रशस्तं वदन्ति वह्नेरविभाग इष्टः॥

स्त्री यदाऽकृतसीमन्ता गर्भिणी प्रसुवीत चेत्।
गृहीतपुत्रा विधिवत्पुनस्संस्कार मर्हति॥ इति।

याज्ञवल्क्यः - 'षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च' इति। बैजावापः-'सीमन्तोन्नयनं मासि चतुर्थे पञ्चमे वा षष्ठे' इति। सांख्यायनः - 'सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनम्' इति।

एवं कालविकल्पः स्वस्वगृह्यानुक्तावुक्तावपि कालातिक्रमे ग्राह्यः। अतश्चतुर्थमासप्रभृति प्रसवात्प्राक्संकटेषु क्वचित्कार्यम्। अयं सावनेनैव ग्राह्यः। श्रीधरीये -

चतुर्थे सावने मासि षष्ठे वाप्यष्टमेऽपि वा।
सीमन्तोन्नयनं कार्यं तेन पुंसुवनं तथा ॥

तेन सीमन्तोन्नयनेन सहेत्यर्थः। तदेवं मासमध्ये मासान्ते वा ऋतुसंभवे तत्रैव गर्भसंभवात्संयोगदिनमारभ्य प्रतिमासं त्रिंशद्दिन संख्यया संख्याय चतुर्थादिमासे सीमन्तोन्नयनं कार्यम्। एतद्वचन-बलाद्युग्ममास एव संकटेऽपि कार्यम्। अयुग्ममासस्य शूद्रादि विषयत्वात्। यत्त्विदं वचनम् -

सौरे मासि शुभर्क्षे तु शुभकर्माणि कारयेत्।
ग्रहाणां नायकस्सूर्यस्तस्मात्सौरं विशिष्यते ॥ इति।

तत्तु मीनदर्शानन्तरं चैत्रमासप्रवृत्तेस्तत्र शुभकर्मकार्यत्वप्रसक्तौ ज्येष्ठदर्शानन्तरमाषाढत्वात्तत्र शुभनिषेधे च प्रसक्ते तदुभयं माभूदिति चान्द्रमासग्रहणनिषेधपरमिति न विरोधः। बैजावापः-

जन्मनोऽनन्तरं कार्यं जातकर्म यथा विधि।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥

अत्र सत्यव्रतः -

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति ॥

ज्ञात्वाशौचे वर्तमानेऽपि पुत्रे जाते जातकर्म कार्यमेव । किञ्च -

द्वादश्यामपरे रात्रौ मासे पूर्णे तथापरे ।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ॥

मनुयमौ च- नामधेयं दशम्यां तु द्वादश्यां वाथ कारयेत् । श्रीधरीये -

द्वादशे षोडशे विंशे द्वात्रिंशेह्नि द्विजातयः ।
नामकर्म क्रमात्कुर्युर्दशमे द्वादशेऽह्नि वा ॥

अत्र मासप्रोक्तवह्निनोक्तनामकरणे च न मास दोषः । तथा तत्रैव -

यस्याः क्रियायास्संप्रोक्तः कालो मासैर्दिनैरपि ।
तस्या न दोषो मूढत्वं वार्धक्यं जीवशुक्रयोः ॥

कालातिक्रमे तु मासदोषः परिहार्य एव । अत्रापि पूर्ववत् कालभेदव्यवस्था । लोकाक्षिः - 'षष्ठेन्नप्राशनं जातेषु वा दन्तेषु' इति । शंखः- 'संवत्सरेऽन्नप्राशनमर्धसंवत्सर इत्येके' । यमः -

ततोऽन्नप्राशनं मासि षष्ठे कुर्याद्यथाविधि ।
अष्टमे वापि कर्तव्यं यच्चेष्टं मंगळं कुले ॥

'जन्मनोऽधिषष्ठे मासि' इत्यापस्तंबः। अत्रापि स्वस्वगृह्यानुसारेण व्यवस्था। संकटेऽन्यो ग्राह्यः। मार्कण्डेयः -

देवतापुरतस्तस्य धात्र्युत्संगगतस्य च।
अलंकृतस्य दातव्यमन्नं पात्रे तु काञ्चने।

याज्ञवल्क्यः -

अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।
षष्ठेऽन्नप्राशनं मासि चूडां कुर्याद्यथाकुलम्॥

निष्क्रमो गृहान्निष्क्रमणम्। चन्द्रिकायाम् - 'चतुर्थे मासि कर्तव्यं शिशो र्निष्क्रमणं गृहात्।' निर्गत्य कर्तव्यमाह यमः -

ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम्।
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम्॥

आपस्तंबः- 'जन्मनोऽधि तृतीये वर्षे चौलं पुनर्वस्वोः'। श्रीधरीये - 'ततस्संवत्सरे पूर्णे चूडाकर्म विधीयते।' बृहस्पतिः -

तृतीयेऽब्दे शिशोर्गर्भाज्जन्मनो वा विशेषतः।
पञ्चमे चौळकं कार्यं स्त्रियाः पुंसोऽथवा समम्॥

तृतीये पञ्चमे वापि सप्तमे जन्मतः शिशोः।
गर्भाद्वा चौळकं कार्यमिति जीवेन भाषितम्॥

सावनात्प्रथमे वर्षे तृतीये पञ्चमेऽपिवा ।
दामोदरमतं ह्येतत्सप्तमे चौळमिष्यते ।।

तृतीयेऽब्दे त्रियंशोने पञ्चमेवोत्तरायणे ।
गर्भाद्वा चौळकं कार्यं न षष्ठे जन्मतः शिशोः ।।

तदेवं जन्मारभ्य सावनेन तृतीये वर्षे चतुर्षु मासेषु गतेषु चौळं कार्यम् । 'गते त्रिभागे तु वदन्ति चौळम्', 'तृतीयेऽब्दे त्रियंशोने' इत्यादिस्मृतेः । अत्र चतुर्थेऽब्देऽपि चौळं सिद्धम् । तदनुक्तिस्तु गर्भपञ्चमग्रहणेन जन्मतश्चतुर्थवर्षसिद्धेः 'न षष्ठे जन्मतः शिशोः' इतिवज्जन्मतश्चतुर्थ्याब्दनिषेधाभावाच्च । यत्तु 'चूडाकृतौ शिशोर्माता गर्भिणी तु भवेद्यदि । विपद्यते तदा गर्भो दम्पती तु तदब्दतः' इति वचनं तत्पञ्चमाब्दादधोविषयम् । 'पञ्चमाब्दादधस्तूर्ध्वं गर्भिण्यामपि कारयेत्' इति स्मृतेः । अत्रापि

नाक्षत्रात्प्रथमे वर्षे तृतीये पञ्चमेऽपि वा ।
सप्तमे चौळकं कुर्यादिति काश्यपदर्शनम् ।।

इत्यादिभिरुक्तकालविकल्पः स्वस्वगृह्यानुक्तौ संकटे वा ग्राह्यः । सावन नाक्षत्रयोर्व्रीहियववद्विकल्पः । स्मृत्यन्तरे विशेषः- 'चौळं

मासेष्वित्यर्थः । 'दृष्टं द्वितीयेऽपि शिशोस्तु चौळं शेषं भवेद्गर्भ-विनाशनाय। सप्तमासादिति पाठान्तरम्। तदा षट्सु मासेषु मातरि गर्भिण्यामपि शिशोश्चौळं कुर्यादित्यर्थः। आत्रेये च -

मातु गर्भे शिशोश्चौळं गर्भघ्नं पितृहाब्दतः ।
तस्माच्चौळं प्रकर्तव्यं मातु गर्भस्य पूर्वतः ॥

दृष्टे द्वितीये शिरसि चौळं दुःखाय नेतरत्। इति। अतस्तृतीये गर्भे सत्यपि प्रथमस्य चौळे(ळं) दुःखाय न भवतीत्यर्थः। श्रीधरीये -

'अतिपातिषु चौळेषु शिरोरोगादिभिः शिशौ ।
पीडिते सर्ववर्षेषु सर्वर्तुष्वविचारयम् ॥

चूडाकर्म प्रयत्नेन कुर्यादेवायुषे शिशोः ।' स्मृत्यन्तरे -

शिशोरकृतचौळस्य चौळं पितृमृतौ कथम् ।
तूष्णीं कृत्वाथ सापिण्ड्ये कृते कुर्यात्समन्त्रकम् ॥

याज्ञवल्क्यः-'गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्यौपनायनम् ।' आपस्तंबः - 'गर्भाष्टमेषु ब्राह्मण मुपनयीत' इत्यत्र बहुवचनं काम्योपनयनोक्त नवमाब्दादि कालग्रहणार्थम् । यद्वा-गर्भसप्तम जन्माष्टमकालग्रहणार्थकम्। बृहस्पतिः -

जन्मतः केवलं संज्ञा सप्तमे गर्भतोऽष्टमे ।
वसन्ते विधिवत्कुर्याद्विप्राणामुपनायनम् ॥

अतो ब्राह्मणस्य गर्भग्रहणादारभ्य जन्मतोवाष्टमे वर्षे व्रतादेशः कार्यः । अत्रगर्भाष्टमो मुख्यः । 'गर्भाष्टम' इति प्रथमोपात्तत्वात् । 'गर्भादि संख्या वर्षाणाम्' इति गौतमस्मृतेश्च । बृहस्पतिः-

नवमं दशमं वापि वर्षे चोत्तममध्यमे ।
ब्राह्मणस्य क्रमात्प्रोक्त मधमंचाधमाधमम् ॥

गर्भतोऽष्टमनवमौ वत्सरावुत्तममध्यमौ । जन्मतो नवमदशमा-वधमाधमाधमावित्यर्थः । यत्त्वात्रेये-

'ऋग्यजुस्सामाथर्वेशा जीवशुक्रकुजेन्दुजाः ।
शाखाधीशे शक्तियुक्ते तच्छाखाध्ययनं शुभम् ॥

इति, तत्पुनः 'अथ काम्यानि । सप्तमे ब्रह्मवर्चसकामम् । अष्टम आयुष्कामम् । नवमे तेजस्कामम् । दशमेऽन्नाद्यकामम् । एकादश इन्द्रियकामम् । द्वादशे पशुकामम्' इत्युक्तकाम्यविषयम् पञ्चमेऽपि काम्यमाहांगिराः -

ब्रह्मवर्चसकामस्य पञ्चमाब्देऽग्रजन्मनः ।
आयुष्कामस्य नवमें कार्यं मौञ्जीनिबन्धनम् ॥

आत्रेये च-

सप्तमादिषुवर्षेषु गर्भतस्तूपनायनम् ।
केऽप्याहुर्जन्मतः षष्ठे पञ्चमे वा व्रतक्षमे ॥

अतो ग्रहबलाबलचिन्तनं काम्योपनयन विषयमेव । 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्' इति श्रुतेः प्रबलत्वाद्दुर्बलस्मार्त ग्रहबलादिचिन्तनं न किञ्चित्करमिति कालदीपव्याख्याने निर्णीतत्वान्नित्याष्टमवर्षोपनयने शाखाधीशबलाबलचिन्ता न कार्येति सिद्धम् । अत्र पितुर्विद्यावृत्तादिविरहे तद्युक्तः समुदेतोऽन्य उपनेता प्रार्थनीयः । तथापस्तंबः- 'तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम् । तस्मादभिजन विद्यासमुदेतं समाहितं संस्कार मीप्सेत्' इति । एवं स्वस्य समुदेतत्वेऽप्याशौच संभवेऽप्यन्येन कारयितव्यमुपनयनम् । अन्यथा कालातिक्रमदोषापत्तेः । एवं कालातिपत्तावन्येन कन्याप्रदानं पित्राद्यनुज्ञया कार्यमिति प्रागेव निरणैष्म । किञ्च- 'त्रिरात्रमुभयो रधश्शय्या ब्रह्मचर्यम्' इत्यविशेषेण स्मरणादुत्तरत्र क्रमविधानाच्च विवाहादिशेषहोमान्तं ब्रह्मचर्यं द्वितीयादि विवाहेपि कार्यम् । एवं ब्रह्मचर्य विधानात् ।

'तांबूलेऽभर्तृकस्त्रीणां यतीनां ब्रह्मचारिणाम् ।
एकैकं मांसतुल्यं स्यात् संभूय तु सुरासमम् ॥'

इति ब्रह्मचारिणां तांबूलभक्षणे प्रत्यवायस्मरणात् तच्च न कार्यम् । एवं 'षोडशोद्वाहगर्भाब्दे पित्रन्ताब्दे क्षुरं त्यजेत्' 'षष्ठाब्दे षोडशाब्दे च विवाहाब्दे तथैव च । मातापित्रोर्मृताब्दे च वपनं नैव कारयेत्' ॥ 'बन्धान्मुक्ते विवाहे तनुनखवपने सार्वकालं प्रशस्तम्'

'विवाहे पञ्चमाहे च दशाहे मृतसूतके ।
सद्यः क्षौरं प्रकुर्वीत तनुरंगोपजीविनाम् ॥'

इत्यादिवचनेषु विवाहमात्रावलंबनेन सामान्येन क्षौरविधिनिषेध दर्शनाद् विशेषानुक्तेश्च द्वितीयादिविवाहेषु च वपनं कार्यम् । विवाहाब्दे च तन्न कार्यमिति निरवद्योऽयं निर्णयः । एते च निषेकादयो देहसंस्कारा एव । तथा मनुः -

वैदिकैः कर्मभिः पुण्यै र्निषेकाद्यैर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।

एते बीजगर्भदोष प्रशमनार्थाश्च। तथा याज्ञवल्क्यः - 'एवमेनश्शमं याति बीजगर्भसमुद्भवम्।' इति। एवं निषेकादि संस्कार करणे मनुश्च-

गार्ह्यैर्होमैर्जातकर्म चूडामौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥

हारीतः - 'द्विविध एव संस्कारो भवति ब्राह्मो दैवश्च। गर्भाधानादिः स्मार्तो ब्राह्मः पाकयज्ञहविर्यज्ञसोमयज्ञाश्चेति दैवः। ब्राह्मसंस्कार-संस्कृतः ऋषीणां समानतां सलोकतां सायुज्यं गच्छति। दैवेनोत्तरेण संस्कृतो देवानां समानतां सलोकतां सायुज्यं गच्छति' इति। एतद्गुणविहीनाभिप्रायम्। तथा गौतमः- 'यस्यैते चत्वारिंशत्संस्कारा न चाष्टा वात्मगुणा न स ब्रह्मण स्सायुज्यं सालोक्यं च गच्छति; यस्य खलु संस्काराणामेकदेशोऽप्यष्टा-वात्मगुणास्सन्ति स ब्रह्मणस्सायुज्यं सालोक्यं च गच्छति' इति। शंखश्च -

संस्कारै स्संस्कृतः पूर्वैरुत्तरैरपि संस्कृतः।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकम्॥
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः।

ते चात्मगुणा गौतमेनोक्ताः । 'अथाष्टा वात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मंगलमकार्पण्यमस्पृहा' इति । तेषां लक्षणमाह बृहस्पतिः -

अरौ वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यत्वधीर्दयैषा प्रकीर्तिता ॥

बाह्ये वाभ्यन्तरे वापि दुःख उत्पादिते परैः ।
न प्रकुप्यति नो हन्ति सा क्षान्तिः परिकीर्तिता ।

न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ॥
[illegible]दोषेषु रमते सानसूया प्रकीर्तिता ।

अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत्प्रचक्षते ॥

शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्तव्यमनायासस्स उच्यते ॥

प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
एतद्धि मंगळं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

स्तोकादपि हि दातव्यं मुदितेनान्तरात्मना ।
अहन्यहनि यत्किञ्चिदकार्पण्यं तदुच्यते ॥

यथोत्पन्नैस्तु संतोषः कर्तव्यस्स्वागतै र्धनैः ॥
परार्थो नाभिलष्येत साऽस्पृहा परिकीर्तिता ॥' इति ।

निषेकादय उपनयनवेदव्रतान्ता एकोनविंशतिसंस्काराः । पाकयज्ञसंस्थास्सप्त हविर्यज्ञसंस्थास्सप्त सोमयज्ञसंस्थास्सप्ते-त्येकविंशतिसंस्थाः । एते चत्वारिंशत्संस्काराः । एतेष्ववश्य-कर्तव्यै र्वेदव्रतान्तै स्सति विवाहे औपासनहोम स्थालीपाकवैश्वदेव पञ्चमहायज्ञश्राद्धादिभि र्नित्यैस्संस्कारैरन्यासु च संस्थासु यथाशक्त्यनुष्ठानैरष्टभिरात्मगुणैश्च युक्तः पुरुषः परं ब्रह्माधि-गच्छतीति तात्पर्यम् । अखण्डादर्शे -

भर्त्रा पत्नी सदाभ्यर्च्या भूषणाच्छादनाशनैः ।
उत्सवे बन्धुभिः पूज्या भूषणाच्छादनाशनैः ॥

वेदेऽद्वितीयः स्मृतिषु प्रवीणो वेदान्तविश्रान्तमनाः श्रुतेषु ।
सुधी स्सदाचारनिधि स्समिन्धे सद्वृत्सलो वैदिकसार्वभौमः ॥

इत्युत्सवनिर्णयस्समाप्तः

# ।। एकादशी निर्णयः ।।

इदानीं तावदेकादशी निर्णीयते- ननु ग्रन्थान्तरे पुनरष्टादशधा विभज्य व्यवस्थया निर्णीतत्वात् तन्निर्णयः किमर्थं त्वया क्रियते। मिथो व्याहतिबाहुळ्यात्प्रौढवादप्रायत्वात्तद्व्यवस्थाया दुस्स्थ - त्वाच्च। तथाहि। सूर्योदयमारभ्य वर्तमानैकादशी शुद्धेत्युक्तम्। तदयुक्तम् -

अरुणोदयं यदा शुद्धं दशमीगन्धवर्जितम्।
सर्वदोषविनिर्मुक्तमुपोष्यं तद्दिनं नरैः ।।

इति भविष्यत्पुराणवचनेन अरुणोदयवेधविधुराया एव एकादश्याश्शुद्धत्वनिश्चयात् उदयादितिथिप्रवृत्तिस्मरणस्यैकादशी-व्यतिरिक्ततिथिविषयत्वाच्च। तथा स्कान्दे -

प्रतिपत्प्रभृतयो ह्येता उदयादोदयाद्रवेः।

प्रकृतस्य तिथेरुदयादित्वस्यापवादत्वेन हरिवासरवर्जिता इत्यस्यार्थसमर्थनस्य युक्तत्वेन अरुणोदये दन्तधावनवर्जन-परत्वकथनं विद्वांसः परामृशन्तु अप्रकृतार्थापवादायोगात्। तदानीं 'प्रत्यूषे धावयेद्दन्तान् हरिवासरवर्जितम्' इत्येव वचनव्यक्तिः स्यात्। न तथास्ति। अरुणोदयविद्धोपवासनिषेधाभिप्रायं तदिति युक्तम्।

तथा स्मृतिचन्द्रिकायाम् -

दशम्यनुगता यत्र तिथिरेकादशी भवेत्।
तस्यापत्यविनाशाय परेत्य नरकं व्रजेत्॥

इत्यादीनि यानि विद्धोपवासनिषेधपराणि तानि सर्वाण्यरुणोदय-वेधाभिप्रायाणीति मन्तव्यम्।

तथा कण्वः -

अरुणोदयकाले तु दशमी यदि दृश्यते।
तत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणम्॥

भविष्यत्पुराणे -

अरुणोदयकाले तु दशमी यदि दृश्यते।
पापमूलं तदा ज्ञेयमेकादश्यामुपोषणम्॥

गोभिलः -

अरुणोदयकाले तु दशमी यदि संगता ।
संयुक्तैकादशीं तां तु मोहिन्यै दत्तवान्हरिः ॥

नारदश्च-

अरुणोदयकाले तु दशमी यदि दृश्यते ।
न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ॥

एवं च यत्तु कैश्चिदुक्तं यानि विद्धोपवासनिषेधपराणि तान्युदयादूर्ध्ववेधपराणीति तदप्यपास्तम् । एवं स्मृतिचन्द्रिकायामरुणोदयवेधस्य त्याज्यत्वनिश्चयात् । स्मृति[illegible]ारसमुच्चये च -

उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुता ।
संपूर्णैकादशी सा स्यात्तत्रैवोपवसेद् गृही ॥

कलान्वयेऽपि विप्रेन्द्र ! दशम्यैकादशीं त्यजेत् ।
सुराया बिन्दुना स्पृष्टं गंगांभ इव दुष्यति ॥
न तत्रैकादशी ग्राह्या धर्मकामार्थनाशिनी ॥

अतस्त्रिवर्गार्थिभिररुणोदयवेधस्त्याज्य इत्यर्थः ।

सौरधर्मे च -

आदित्योदयवेलाया: प्राङ्मुहूर्तद्वयान्विता ।
सैकादशी तु संपूर्णा विद्धान्या परिकीर्तिता ।।

अत अरुणोदये दशमीयुक्ता विद्धेति सिद्धम् ।

भविष्यत्पुराणे च -

अरुणोदयकाले तु दशमी यदि दृश्यते ।
सा विद्धैकादशी तत्र पापमूलमुपोषणम् ।।

अरुणोदय वेळायां दिशागन्धो भवेद्यदि ।
प्रदुष्टं तत्प्रयत्नेन वर्जनीयं नराधिप ।।

ननु-

दशमीशेषसंयुक्तो यदि स्यादरुणोदय: ।
नैवोपोष्यं वैष्णवेन तस्मिन्नैकादशीव्रतम् ।।

इतिवचनादरुणोदयवेधनिषेधो वैष्णवविषय : इतिचेन्न - 'उपोष्यं तद्दिनं नरै:' इति सर्ववर्णाधिकारस्मरणभंगप्रसंगाद् धर्मार्थकाम-विन[illegible]ाच्च । किञ्च -

'एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत् ।।',

'एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवम्', इतिमत्स्यादि वचनेष्वेकादश्युपवासस्य वैष्णवव्रतत्वप्रतिपादनादवैष्णवानां तत्रानधिकारः स्यात्। 'न चलति निजवर्णधर्मतो यस्सममतिरात्मसुहृद्विपक्षपक्षे', 'समात्मा सर्वभूतेषु निजाचारादविप्लुतः। विष्णवर्पिताखिलाचारस्स हि वैष्णव उच्यते' इति वैष्णवलक्षणस्मृतेः, वर्णाश्रमधर्मवद्भिः सद्भिररुणोदयवेधस्यावश्यपरिहरणीयत्वात्। अन्यथा सर्ववर्णसाधारण्येनैकादश्युपवासविधायकानि वचनानि भ्रान्तजल्पितानि स्युः। तस्मात् आहिताग्न्यनृतनिषेधवचनवद्वैष्णवस्य दोषाधिक्यप्रदर्शनपरं तदिति मन्तव्यम्। अतो धर्मार्थकामकामैररुणोदयवेधस्त्याज्य एव। अन्यथा मोहिन्यै दत्तत्वेन तन्मोहिन्या एव स्यात्। एवं हि देवाश्च तस्यै वरं दत्तवन्तः।

मोहिन्यास्तु वचःश्रुत्वा सुरास्सर्वे महीपते।
संचिन्त्य सुचिरं कालं दिगंबरपुरोगमाः॥

यमस्य दर्शनार्थाय वैकुण्ठव्यसनाय च।
पाषण्डिनां विवृद्ध्यर्थं पापसंजननाय च॥

ऊचुस्ते मोहिनीं देवा लोकसंमोहनाय च ।
दत्तं मोहिनि ते स्थानं प्रत्यूषे दशमीयुतम् ॥
दुष्टं हरिदिनोपेतं दशम्याः प्रान्तमेव हि ॥

इत्यादिवचनैररुणोदयविद्धोपवासे चन्द्रिकायां यमदर्शनादि - फलावाप्तिप्रतिपादनाच्च सर्वैरेवारुणोदयवेधस्त्याज्यः । पाद्मे च-

दशम्याः प्रान्तविद्धं हि दत्तं जंभासुराय तु ।
ब्रह्मणा परितुष्टेन घूर्जटेर्वचनेन च ॥

न प्रार्थयेऽहमुदयं न चैव हरिवासरम् ।
वैनतेयोदयो मह्यं दीयतां विबुधेश्वराः ॥

सूर्योदय विहीनं तु दशम्याः प्रान्ततः स्थितम् ।
पद्मनाभदिनासन्नं तत्र यद्यत्फलं तव ॥

इत्यरुणोदयविद्धोपवासो जम्भासुरार्थ इति च स्पष्टम् । किञ्च-

त्रयोदश्यां न लभ्येत द्वादशी यदि किंच न ।
उपोष्यैकादशी तत्र दशमीमिश्रितापि च ॥

इति वचनेन 'द्वादशीसाम्यह्रासयुक्ते विद्धासमैकादश्यौ गृहियत्योर्व्यवस्थिते' इत्युक्तम् । स हि प्रौढवाद एव, तदुदाहृत वचने तथाव्यवस्थानवगमात् ।

शुद्धैव द्वादशी राजन् उपोष्या मोक्षकांक्षिभिः ।
सकामैर्गृहिभिः पूर्वविद्धापीति विनिश्चयः ॥

इति वचनान्तरेण व्यस्थायामपि विद्धासमाविषयत्वाप्रतीतेः ।

दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते ।
एकादश्यां तदा ब्रह्मन्नुपवासः कथं भवेत् ॥

इति प्रकृतपूर्ववचनापेक्षया व्यवस्थायां द्वादशीसाम्यह्रासयुक्तयोर्विद्धाहीनयोरप्यनेन वचनेन व्यवस्था प्रसज्येत–तच्च तवानिष्टम् । तत्र त्वया सर्वेषां पूर्वत्रोपवासोक्तेः, तदपि तव न शक्यं वक्तुम्–'एकादशी न लभ्येत सकला द्वादशी यदि । उपोष्या दशमी विद्धा ऋषिरुद्दालकोऽब्रवीत् ॥' इति पूर्वत्रोपोष्यत्वप्रतिपादकेन त्वदुदाहृतेनानेन वचनेन दशमीमिश्रिता पूर्वेत्यस्य व्यवस्था–वचनस्य तुल्यार्थत्वेन द्वादशीसाम्यह्रासयुक्तयोरेव, न्यूनयोरपि पूर्वत्र वा सर्वेषामुपवासप्रसक्तेर्विद्धाहीनयोर्वा व्यवस्था प्रसज्येत । किञ्च–

'कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदा ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥'

इति वचनेन द्वादश्याधिक्यवत्यामपि विद्धसमायां परत्रोपवास उक्तः। ततस्तेनैव वचनेन विद्धहीनायामत्रापि परत्रोपवासेऽवश्य-कर्तव्येऽपि 'एकादशी न लभ्येत' इति वचनेन पूर्वत्रोपवासकथनं वेधपक्षपातएवेति स्पष्टम्। उभयत्र विद्धत्वाविशेषाद् व्यवस्था-पकाभावाच्च। द्वादश्याधिक्यात्परत्रोपवास उक्तस्तदभावात् पूर्वत्रोक्त इति चेन्न- 'कलार्धेनापि' इत्यस्य द्वादश्याधिक्य-विषयत्वाप्रतीतेः। द्वादश्याधिक्ययुक्ताया अपि विद्धहीनायाः

'एकादशी न लभ्येत सकला द्वादशी यदि।
उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत्॥'

इति वचनेन पूर्वत्रोपवासोक्तेश्च। वचनद्वये द्वादश्याधिक्या-प्रतीतावपि कस्याश्चित्पूर्वत्रोपवासः कस्याश्चिद्विद्धहीनायाः परत्रोपवास इति व्याहतिस्स्फुटा। त्रयोदश्यां कामिनः पारण-निषेधाद्विद्धहीनात्रये पूर्वत्रोपोष्यत्वोक्तावपि विद्धाधिकाया द्वादशीसाम्यवत्याः

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।
अमावास्या तृतीया च उपोष्यास्स्युः परान्विताः॥ इति

परत्रोपोष्यत्वेन त्वदुक्तायाः पूर्वत्रोपवासः प्रसज्येत । त्रयोदश्यां द्वादश्यभावात् 'एकादश्यष्टमी' इत्यस्मिन्वचने विद्धाधिक्यं द्वादशीसाम्याधिक्यं वा न प्रतीयते ।

कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदा ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

इत्यत्र च विद्धासाम्यं द्वादश्याधिक्यं वा न प्रतीयते । अतो विद्धा-मात्रस्य त्याज्यतापरमिदं वचनद्वयम् । किञ्च द्वादश्याधिक्ययुक्ताया विद्धहीनाया अपि पूर्वत्रोपवासकथनं महासाहसम् ।

तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ।
शुद्धाप्येकादशी त्याज्या परतो द्वादशी यदि ॥

द्वादशी तु त्रयोदश्यां कलामात्रापि दृश्यते ।
पारणाय न लभ्येत द्वादशी यदि किञ्चन ॥

इत्यादिवचनैस्त्रयोदश्यां द्वादश्यभाव एव पूर्वत्रोपवास विधानात् । द्वादश्याधिक्येऽपि पूर्वत्रोपवासे 'द्वादश द्वादशीर्हन्ति पूर्वस्यां पारणं कृतम्' इति प्रत्यवायस्मरणाच्च । तर्हि परत्रोपवास इति चेत् तच्च तव न शक्यम् ।

'शुद्धा यदा समाहीना समक्षीणाधिकोत्तरा ।
एकादशीमुपवसेन्न शुद्धां वैष्णवीमिति ।।'

'एकादशी न लभ्येत,' इत्यादिवचनैर्द्वादश्याधिक्येऽपि त्वया पूर्वत्रोपवासोक्तेः । स च तव विरुद्धः-

द्वादशी तु कला काष्ठा यदिस्यादपरेऽहनि ।
द्वादश द्वादशीर्हन्ति पूर्वस्यां पारणं कृतम् ।।

इति परत्रैवोपवासविधानात् । 'न शुद्धां वैष्णवीमिति' वचन-विरोधान्न परत्रोपवास इति चेन्न - 'द्वादशी तु कलामात्रा' इत्येतद्वचनविरोधात्, 'द्वादशद्वादशीर्हन्ति' इति प्रत्यवायाधिक्य-स्मरणेन पूर्वत्रोपवासायोगाच्च । ननु शुद्ध[redacted]या-धिक्याभावे पूर्वत्रोपवासो न विरुद्धः । तत्सहोपात्तत्वाद् द्वादश्याधिक्ययुक्ताया अपि शुद्धैकादश्याः पूर्वत्रोपवास इति चेन्न-बहुवचन विरोधात् 'शुद्धा यदा समाहीना' इति शुद्धसमाहीनयो-रेवानूदितत्वात् तत्प्रतियोगित्वेन 'समाक्षीणा तथोत्तरे' इत्येव पाठस्य न्याय्यत्वाच्च । अहो विरोधपरम्परा । विद्धाधिकायां समाधिकोत्तरायां पूर्वत्रोपवासमाशङ्क्य विद्धैकादश्युपवासस्य दोषवत्तया निरस्[redacted]

नोपोष्या दशमीविद्धा सदैवैकादशी तिथिः ।
तामुपोष्य नरो जह्यात्पुण्यं वर्षशतोद्भवम् ॥

दशम्या यस्तु दिद्धायामेकादश्यामुपोषयेत् ।
तस्यायुः क्षीयते सत्यं नारदोऽहं ब्रवीमि वः ॥

दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तस्यापत्यविनाशाय परेत्य नरकं व्रजेत् ॥

दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

इत्यादि नारदादिवचनानि तेनैवोदाहृतानि, तथापि कुलिंगशकुनि-न्यायेन विद्धहीनयोरुपवास उक्तः । न च विद्धहीना विद्धाधिकात्व भेदेन व्यवस्थाऽस्थेया । तेषु च वचनेषु तथा विषयभेदाप्रतीतेः । येन विद्धहीनात्रये पूर्वत्रोपवासश्च विद्धाधिकायां परत्रोपवासश्च स्यात् । किञ्च वेधनिरूपणप्रकरणे-

'नवम्येकादशी चैव दिशा विद्धा यदा भवेत् ।
तदा त्याज्या विशेषेण गंगांभः श्वदृतौ यथा ॥'

इत्यादिवचनमुदाहृत्य एकादश्यां दशम्या किञ्चिन्मात्रविद्धायां द्वादश्येवोपवासे स्वीकार्येति निश्चितम्, तथाप्यत्र विद्धोपवास

एवोक्तः । किञ्च प्रतीच्यमतोपन्यासावसरेप्यष्टधाभिन्नैकादशीषु द्वादशीहानियुक्तशुद्धैकादशीव्यतिरिक्तासु सप्तस्वेकादशीषु परैवोपोष्येत्युक्त्वा तत्र प्रमाणत्वेन

'सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरैः ।
प्रादुर्भवतु वा मा वा यतो नित्यमुपोषणम् ।।

द्वादशी मिश्रिता कार्या सर्वत्रैकादशी तिथिः ।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ।।'

इति वचनानि तत्रोदाहृतानि । तेषु द्वादशीपदमुद्धृत्य दशमीपदं प्रक्षिप्य 'दशमीमिश्रिता कार्या' इति तान्येव वचनानि विद्धहीना-त्रयोपवासविधावन्यत्र चोदाहृतानि । अहो वेधपक्षपातं संपश्यन्तु सन्तः । हन्त किं तदानीमपि स्वेनैवोदाहृत नरकव्रजनायुःक्षया-पत्यविनाशवर्षशतोद्भवपुण्यनाशादिप्रत्यवायपरवचनजातं पलायितं शयितं वा । ननु विद्धानां दशमीदुष्टत्वेन तत्रोपवासा-संभवात् परत्र द्वादश्याश्चोदयात्प्राक्प्रविष्टत्वेन शुद्धद्वादशीत्वा-भावात् तत्रोपवासपरवचनाभावाच्च सर्वदोपवासबाधप्रसक्तौ वचनबलाद्विद्धास्वेवोपवास इति निश्चीयत इति निश्चितत्वाद् विद्धैवोपोष्येति चेदहो व्यामोहं पश्यन्तु । विद्धोपवासे तेनैवोदा-

हृतेनानर्थपरम्परावाचिना वचननिचयेन विद्धोपवासस्यैव त्याज्यत्वात् । तर्हि विद्धोपवासपरवचनानां का गतिरिति चेत् अगतिरेवगतिस्तेषामन्यार्थं प्रवृत्तत्वात् । तथा स्मृतिसारसमुच्चये स्पष्टं निर्दिष्टं शिष्टानाम् ।

यानि कानि च वाक्यानि विद्धोपोष्यपराणि तु ।
असुराणां मोहनाय पाषण्डानां विवृद्धये ॥

अतो विद्धां परित्यज्य द्वादशीमुपवासयेत् ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति ।

शौनकश्च -

अर्धरात्रेषु केषांचिद्दशम्या वेध इष्यते ।
अरुणोदयवेळायां नावकाशो विचारणे ॥

ब्रह्मकैवर्ते च -

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
चतुष्टयविधानेन वेधादीनां किलोदयः ॥

अरुणोदय वेधस्स्यात्सार्धं तु घटिकात्रयम् ।
अतिवेधो द्विघटिका प्रभातं दर्शनाद्रवेः ॥

महावेधोऽपि तत्रैव दृश्यते वा न दृश्यते ।
तुरीयस्तत्र कथितो वेधस्सूर्योदये बुधैः ॥
सर्वप्रकार वेधोऽयमुपवासस्य दूषकः ।

नारदीये च -

कलावेधेऽपि विप्रेन्द्र ! दशम्यैकादशीं त्यजेत् ।
सुराया बिन्दुना स्पृष्टं गंगांभ इव निर्मलम् ॥

यदुक्तमुदयात्प्राक्प्रविष्टायां द्वादश्यामुपवासविधायकवचनं नास्तीति, तत्र-

'एकादशी यदा लुप्ता परतो द्वादशी यदि ।
उपोष्या द्वादशी तत्र य इच्छेत्परमां गतिम्' ॥

इति व्यासस्मृतिः स्मर्यते । किञ्च -

दशमीमिश्रिता पूर्वा समा वृद्धिंगता परा ।
उपोष्या द्वादशी तत्र न दशम्या युता क्वचित् ॥

एकादशीमुपोष्येत द्वादशीमथवापि ताम् ।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥

इत्यादिवचनजातं किं न विज्ञातं विस्मृतं वा । तामिति द्वादशी परामृश्यते । 'विमिश्रां वा' इत्युक्तेः 'न दशम्या युताम्' इति

निषेधाच्च, त्रयोदशीविमिश्रामिति व्याख्यानं साधीयः। किञ्च -

द्वादशी संगता यत्र भवत्येकादशी तिथिः।
दिनक्षयेऽपि सा पुण्या न दशम्या युता क्वचित्॥

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः॥

इत्यादिकं च वचनमुदाहृत्य विप्रतिषेधवृत्त्या तिथित्रये त्रयोदश्य पारणनिषेधात् सकामैः पूर्वत्रोपवासः कर्तव्यो निष्कामैस्तिथित्रयमुपोष्यमित्युक्तम्-तदयुक्तम्। 'सुतार्थिभिः', 'पुत्रपौत्रसमन्वितः', 'न कुर्यात्पुत्रवान् गृही' इत्यादिषु फलविशेषस्मरणात्। 'पारणं तु त्रयोदश्यां न कर्तव्यं फलार्थिभिः' इत्यत्रापि फलशब्दस्य च्छागपशुन्यायेन पुत्ररूपफलविशेषे पर्यवसानात पुत्रार्थिन एव त्रयोदशीपारणनिषेधो नान्यफलार्थिन इति विदुष सुस्पष्टम्। न च निषेधस्तिथित्रयप्रयुक्तोपवासनिबन्धनः नैकादशी विषयः तदुपवासस्य नित्यत्वेनावश्यकर्तव्यत्वादविशेषेणोपवासविधानाच्च। तथा कौर्मे-

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्॥

स्कान्दे च -

द्वादशी संगता यत्र भवेदेकादशी तिथिः ।
दिनद्वयेऽपि सा पुण्या न दिशाढ्या कदाचन ॥

कौर्मे-

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्या सा तिथिः कार्या सर्वपापहरा स्मृता ॥

स्मृतिसारसमुच्चये -

द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः ।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् ॥

स्मृतिचन्द्रिकायाम् -

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिस्पृशी नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति ॥
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।

एवमेषु वचनेषु बहुफलोक्तेस्सकामस्यापि त्रयोदशीपारण-मविरुद्धम् । सिद्धं च तिथित्रयेऽप्युपोषणम्, अतोपि प्रतिषेधा-भावान्न व्यवस्था स्थाप्या । अन्यथा क्रतुशतपुण्यादिफलश्रवणा-न्निष्कामस्यापि त्रयोदश्यां पारणं न स्यात् । ततश्च तिथि-

त्रयैकादश्युपवासपरवचननिचयवैयर्थ्यं स्यात्। पापवत्पुण्यस्यापि मोक्षप्रतिबन्धकत्वेन त्याज्यत्वात्- 'तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति' इति श्रुतेः। तथा सति त्रयोदशीपारण-परवचनानि दत्तजलाञ्जलीनि स्युः। अतोऽत्र त्रयोदशीपारण तिथित्रयात्मकैकादश्युपोषणं च सकामाकामयोर्विधि-बलात्कर्तव्यमेव।

तिथित्रयमृते देवि नोपोष्या दशमीयुता।
सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी॥

इत्येकादशीकलायुक्ता त्रयोदशीमिश्रिता तिथित्रयात्मिका द्वादश्येवोपोष्या। इदं तिथित्रयं विहाय दशमीयुक्तैकादशी नोपोष्येति विद्धैकादश्युपवासनिषेधपूर्वकं परत्रोपवास-विधानात्।

शुद्धं परदिनं न स्याद् द्वादशीं ग्राहयेत्तदा।
द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम्॥

अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम्।
दशम्यनुगता हन्ति द्वादश द्वादशीफलम्॥
धर्मापत्यधनायुश्च त्रयोदश्यां तु पारणम्।

इति स्कान्दादिवचनै र्विद्धोपवासे प्रत्यवायविधानाच्च। ननु-

एकादशी मुपोष्यैव द्वादश्यां पारणं स्मृतम्।
त्रयोदश्यां न तत्कुर्याद् द्वादश द्वादशी क्षयात्॥

पारणं तु त्रयोदश्यां यः करोति नृपोत्तम।
द्वादश द्वादशीर्हन्ति नात्र कार्या विचारणा।

उपोष्यैकादशीं यस्तु त्रयोदश्यां तु पारणम्।
करोति तस्य नश्यन्ति द्वादश्यो द्वादशैव तु॥

इति कौर्मस्कान्दादिवचनैस्त्रयोदशीपारणनिषेधात्कथं कामिन-स्तत्रपारणमितिचेन्न 'तत्रक्रतुशतंपुण्यम्' इत्यविशेषेण सकामा-कामयोस्त्रयोदश्यां पारणविधानात्। तर्हि विकल्पोऽस्त्विति चेन्न निषेधस्यान्यविषयत्वात्। सति गत्यन्तरेऽष्टदोषदुष्टस्य तस्यायुक्तत्वाद् विद्धोपवासे दोषस्मृतेश्च। तथा श्री विष्णुरहस्ये -

दशमीशेषसंयुक्तामुपोष्यैकादशीं नृप।
संवत्सरकृतेनेह नरो धर्मेण मुच्यते॥

ब्रह्मकैवर्ते च -

दशमीशेषसंयुक्तां यः करोति विमूढधीः।
एकादशीफलं तस्य न स्याद् द्वादशवार्षिकम्॥

नारदश्च-

> नोपोष्या दशमीविद्धा सदैवैकादशी तिथिः ।
> तामुपोष्य नरो जह्यात्पुण्यं वर्षशतोद्भवम् ॥

इति सकृदभ्यासात्यन्तावृत्तिभेदेन वा बुद्धिपूर्वाभ्यासभेदेन वा वर्षद्वादशवर्षशतोद्भवपुण्यहानिव्यवस्था स्थाप्या । 'नोपोष्या दशमीविद्धा धर्मकामार्थनाशिनी', 'स याति नरकं ध्रुवम्' 'दशम्यनुगता हन्ति द्वादश द्वादशीफलम्' इति प्रत्यवायभूयस्त्व-स्मृतेः, न कदाचिदपि विद्धोपोष्येत्यर्थः । अतस्त्रयोदशीपारण-निषेधवचनानां न तथा व्यवस्था दुस्स्थत्वात् । वयं पुनरत्र ब्रूमः - द्वादशीसाम्यह्रासयुक्तायां शुद्धाधिकैकादश्यां सकामाकामयोः 'पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां सदा' इत्यादि वचनैर्या व्यवस्था कृता तद्विषये क्रतुशतपुण्यफलावाप्तिबलेन सकामै-श्शुद्धाधिकोपवासो न कार्यः, किंतु शुद्धैकादश्युपवास एव कार्यः, सकामस्य त्रयोदशीपारणनिषेधात् द्वादशद्वादशीक्षयस्मरणाच्च । यद्वा-द्वादश्याधिक्ये सत्यालस्यादिना तदतिक्रमेण त्रयोदशीपारणे प्रत्यवायपरं कौर्मस्कान्दादिवचनजातमिति, युक्तं चैतत् । तथा तेष्वर्थप्रतीतेः, 'महाहानिकरी ह्येषा द्वादशीलंघिता

नृणाम्' इत्यादिस्मृतिभ्यश्च । अतस्तिथित्रयोद्देश्योपवासस्यैव निषेध: । तथा कात्यायन: -

> तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृत: ।
> प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनम् ॥

तत्प्रयुक्तेति-संक्रान्त्यादिप्रयुक्तेत्यर्थ: । प्रयुक्त्यन्तरयुक्तस्य - नित्यैकादश्युपवासविधिचोदितस्य । जैमिनिश्च-

> तन्निमित्तोपवासस्य निषेधोऽयमुदाहृत: ।
> नानुषंगस्ततो ग्राह्यो यतो नित्यमुपोषणम् ॥

तन्निमित्तेति - संक्रान्त्यादि निमित्तेत्यर्थ: । अनुषंग: - तिथित्रयसंक्रान्त्यादिरेकादशीसंबन्धसंक्रान्त्यादिगतो निषेध: एकादश्युपवासे न ग्राह्य: नित्यत्वादित्यर्थ: । अनुषंगनिषेधमाह गौतम:-

> आदित्येहनि संक्रान्त्यामसितैकादशीषु च ।
> व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद् गृही ॥

असितैकादशीति काम्याभिप्रायम् । मात्स्ये च-

> दिनक्षये च संक्रान्त्यां ग्रहणे चन्द्रसूर्ययो: ।
> उपवासं न कुर्वीत पुत्रपौत्रसमन्वित: ॥

जैमिनिश्च-

आदित्येऽहनि संक्रान्त्यां व्यतीपाते दिनत्रये ।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही ।।

अत्र सर्वत्र 'पुत्रवान्', 'पुत्री' इति हेतूक्तेः काम्योपवासविषयोऽयं निषेधः । न तु नित्यैकादश्युपवासविषयः ।

पाद्मे-

एकादशी वार्कदिने भरण्यां वा यदा भवेत् ।
उपोष्यैकादशीं तां तु ब्रह्महत्यां व्यपोहति ।।

दशमीशेषसंयुक्तां न कुर्वीत कदाचन ।
तिथिवृद्धौ तथा हान्यां संप्राप्ते वा दिनत्रये ।।

'कदाचन' - विद्धोपवासपरवचनदर्शनेऽपीत्यर्थः ।

अतो दशमीद्वादशीयुक्तदिनत्रयं नोपोष्यम् । तथा गोबिलः -

एकादशी यदा ब्रह्मन् दिनक्षयतिथिर्भवेत् ।
तदाह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।।

ऋश्यशृंगश्च -

एकादशी यदा वत्स दिनक्षयतिथिर्भवेत् ।
तत्रोपोष्या द्वादशी तु त्रयोदश्यां तु पारणम् ।।

अतस्तिथित्रये सकामनिष्कामयोरुभयोरप्युपवासस्त्रयोदशीपारणं च वचनसिद्धम् । अतः प्रौढवादेन सकामस्य विद्धोपवासकथनं मोहिनीमोहप्रयुक्तमेव । किञ्च विद्धाशुद्धोपवास वचनेष्वन्यतराभ्युपगमेऽन्यतरविरोधो दुर्निरोधो वेधोमुखैरपि । तेषु वचनेषु भेदेन विषयव्यवस्था दुःस्था । तेषु विषयभेदाप्रतीतेः । अप्रतीतावप्युभयविधवचनाविरोधव्यवस्थायां व्यवस्थापकाभावेन वैपरीत्यप्रसंगो दुर्निवारः सर्वगीर्वाणैरपि । एवं विद्धांगीकारे वर्षशतोद्भवपुण्यहान्यायुःक्षयापत्यविनाशधर्मकामार्थविनाशनरकाद्यनेकानर्थापत्ते र्विद्धोपवासकथनं 'व्यामूढ चेतसाम् बोधाय क्रियतेऽस्माभिरेकादश्यादि निर्णयः' इति त्वदुक्तेभ्यो मूढेभ्य एव रोचते, न परीक्षकेभ्यः । अतो बहुविरोधाद् व्याहतत्वात्प्रौढवादप्राचुर्येणार्थनिर्णयस्य दुष्करत्वाद् बहुदोषदुष्टत्वाच्च ग्रन्थान्तरम् अनादरणीयमेव ।

सांप्रतं विवेकिनां प्रीतयेऽस्माभिरेकादश्या विनिर्णयः क्रियते । अत्र विद्धात्यागान्न प्रत्यवायप्रसंगः । विद्धोपवासपर-

वचनानामन्यार्थं प्रवृत्तत्वात्तदनादरो युक्तः। वेधश्चारुणोदयविषयो वचननिचयसिद्धः । त्रयोदशीपारणनिषेधवचनानां शुद्धाधिकैकादश्युपवासार्हसकामविषयत्वात् तद्विधायकवचनानां विषयभेदेन व्यवस्थितत्वान्न मिथो विषयविप्रतिषेधः। द्वादश्याधिक्ये पूर्वदिने पारणे द्वादशद्वादशीहानि स्मरणाद् द्वयोरपि न त्रयोदशीपारणनिषेधः। तदा न शुद्धात्यागविरोधः - परत्रैवोपवासविधानात् । तथोभयोरपि तिथित्रयात्मकैकादश्युपवासविधानात् त्रयोदश्यां पारणं निर्व्याकुलमिति संग्रहः। तथा विष्णुधर्मे -

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैस्सह ।
उपवासस्स विज्ञेय स्सर्वभोगविवर्जितः ॥

विष्णुमभ्यर्चयेद्भक्त्या रात्रौ जागरणादिकम् ।
तत्तज्जप्यं जपन् ध्यायन् तत्कथाश्रवणादिकम् ॥

तदर्चनं च तन्नामकीर्तनश्रवणादयः ।
उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः ॥

असंभाष्यान्समाभाष्य तुळस्यतसिकादळम् ।
आमलक्याः फलं वापि पारणे प्राश्य शुध्यति ॥

श्रीविष्णुपुराणे -

तस्मात्पाषण्डिभिः पापैरालापस्पर्शने त्यजेत् ।
विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः ॥

स्पर्शने तु बुधस्स्नात्वा शुचिरादित्यदर्शनात् ।
संभाष्य तांश्छुचिषदं चिन्तयेदच्युतं बुधः ॥
तेषामालोकनात्सूर्यं पश्येत मतिमान्नरः ।

कौर्मेतु-

बहिर्ग्रामान्त्यजान्सूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥

बहिरन्त्यजाश्चण्डालादयः । ग्रामान्त्यजा रजकादयः । हारीतः- 'पतितनास्तिकपाषण्डादिसंभाषणमुपवासदिने वर्जयेत् ।'

कात्यायनः -

मिथ्यावादे दिवास्वापे बहुशोऽम्बु निषेवणे ।
अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः ॥

व्यासः-

असकृज्जलपानाच्च सकृत्तांबूलचर्वणात् ।
उपवासः प्रणश्येत्तु दिवास्वापाच्च मैथुनात् ॥

स्त्रीणां तु प्रेक्षणात्स्पर्शात् ताभिस्संकथनादपि ।
निष्पतेत ब्रह्मचर्यं न दारेष्वृतुसंगमात् ।।

सुमंगलीविषये मनुः

पुष्पालंकारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावन[1]वर्जनम् ।।

नारदः -

उपवासदिने राजन् दन्तधावनकृन्नरः ।
सपूतिवक्त्रसंयुक्तो नरकं प्रतिपद्यते ।।

विष्णुरहस्ये -

श्राद्धोपवासदिवसे खादित्वा दन्त धावनम् ।
गायत्र्या शतशः पूतमम्बु प्राश्य विशुध्यति ।।

विज्ञानेश्वरीये-

उपवासो यदा नित्यः श्राद्धं च प्रकृतं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ।।

स्मृत्यन्तरे च-

1. वर्जनम् → मज्जनम् - (पा)

एकादशी व्रतं चैव पितुस्सांवत्सरं दिनम् ।
ऋतुकालश्च तत्रापि श्राद्धकर्म विधीयते ।।

स्मृत्यर्थसारे च -

पित्रोः क्षयदिने प्राप्ते भवेदेकादशी यदि ।
अभ्यर्च्य पितृदेवादीनाजिघ्रेत्पितृसेवितम् ।।

एवं स्मृतिभिर्निश्चितत्वात् द्वादश्यां श्राद्धपरं पुराणवचनमनादरणीयम् , स्मृतेः प्रबलत्वात्पुराणस्य दुर्बलत्वात् ।

श्राद्धविघ्ने समुत्पन्ने न विज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्तव्यं दर्शेवाथ विचक्षणैः ।।

इत्यज्ञातेऽप्येकादश्यामेव श्राद्धविधानाच्च । बोधायन कात्यायनौ -

अष्टवर्षाधिको विप्रो ह्यपूर्णाशीतिवत्सरः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।।

नारदः-

अष्टवर्षाधिको मर्त्यो ह्यपूर्णाशीतिहायनः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।।

ननु तर्हि-

आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ।।

इत्यापस्तम्बस्मरणं कथमिति चेन्न - 'द्वात्रिंशतं गृहस्थस्य' इत्युक्त ग्रासनियमापवादकत्वादस्य तयोर्विशेषेण विहितत्वाच्च । तथा स्मृतिचन्द्रिकायाम्-

गृहस्थो ब्रह्मचारी च आहिताग्नि स्तथैव च ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।।

अतस्तयोरपि भोजने प्रत्यवायो दुरत्ययः । मात्स्ये विशेषः-

एकादश्यां तु यो भुङ्क्ते शक्तिमान्निरुपद्रवः ।
सुरापानसमं पापं भवेत्तस्य न संशयः ।।

कौर्मे-

एकभुक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ।।

एक [1]भुक्तादि विषयः पाद्मे दर्शितः ।

एक[2]भुक्तेन नक्तेन क्षीण वृद्धातुरः क्षिपेत् ।
नातिक्रामेद् द्वादशीं तु यथाकालं द्विजोत्तमः ।।

1.भक्तादि - भक्तादि - (पा)  2.भक्तेन - भक्तेन - (पा)

बोधायनः -

उपवासेष्वशक्तानामशीतेरूर्ध्वजीविनाम् ।
एक भुक्तादिकं कार्य माह बोधायनो मुनिः ॥

पाद्मे-

अनुकल्पस्त्वयं प्रोक्तः क्षीणानां वरवर्णिनि ।
मूलं फलं पयस्तोयमुपभोज्यं भवेच्छुभम् ॥

नत्वेव भोजनं कैश्चिदेकादश्यां बुधैस्स्मृतम् ।
गात्राभ्यंगं शिरोऽभ्यंगं ताम्बूलमनुलेपनम् ॥

व्रतेषु वर्जयेन्नित्यं भक्ष्यं वापि च किञ्चन ।
शाकं मांसं तथा क्षौद्रं तैलं वितथभाषणम् ॥

व्यायामं च प्रवासं च दिवास्वापं च मैथुनम् ।
शष्कुल्यपूपं द्वादश्यां वर्जयेद्भोजनं पुनः ॥

विष्णुधर्मे -

अशक्तास्तूपवासेषु बालवृद्धाश्च रोगिणः ।,
कृत्वैकभुक्तं विप्रेन्द्र उपवासफलं लभेत् ।

स्मृत्यन्तरे -

काव्यालापं गन्धलेपं पुष्पधारणमेव च ।
रक्तस्त्रीदर्शनं चैव क्षौरमभ्यंगमेव च ॥

अनिवेदितभक्तं च वर्जयेन्मर्दनादिकम् ।
त्यजेदुष्णोदकस्नानं सुगन्धामलकादिकम् ॥

दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितम् ।
तिलाश्चैवासिता मुद्गाः कन्दं कृसरवर्जनम् ॥
प्रशस्तं सिन्धुलवणं घृतेनाभ्यञ्जनं व्रते ॥

स्कान्दे-

कांस्यं मांसं मसूरं च चणकान्कोरदूषकाम् ।
शाकं मधु परान्नं च हन्युरष्टाविमे फलम् ॥

विष्णुधर्मे-

कांस्यं मांसं मसूरं च पुनर्भोजनमैथुने ।
द्यूतमत्यंबुपानं च फलप्रेप्सुर्विवर्जयेत् ॥

पैठीनसिः -

भार्या पत्यु र्व्रतं कुर्या द्भार्यायास्तु पतिर्व्रतम् ।
असामर्थ्ये परस्ताभ्यां व्रतभंगो न जायते ॥

स्कान्दे-

पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तु वा ।
एषामलाभ एवान्यं ब्राह्मणं दक्षिणादिभिः ।।

कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ।
भ्रातरं भगिनीं शिष्यं ब्राह्मणं वा नियोजयेत् ।।

कर्ता दशगुणं पुण्यं प्राप्नोत्येव न संशयः ।
यमुद्दिश्य कृतं सोऽपि संपूर्णं फलमश्नुते ।।

कात्यायनः -

काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः ।
काम्येऽप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः ।।

गारुडे-

यत्तु सा कुरुते पुण्यं विना पापं पतिव्रता ।
तत्तस्यास्सकलं देवि तस्यार्धं न लभेत्पतिः ।।

भर्त्रा करोति या साध्वी यत्किञ्चित्सुकृतं शुभम् ।
तस्य पुण्यस्य संपूणमर्धं प्राप्नोत्यसंशयः ।।

मार्कण्डेयः-

नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा ।
निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम् ॥

अनापृच्छ्य तु भर्तारमुपोष्य व्रतमाचरेत् ।
आयुष्यं हरते भर्तुस्सा नारी नरकं व्रजेत् ॥

नास्ति स्त्रीणां पृथक्कर्म न व्रतं नाप्युपोषणम् ।
पतिशुश्रूषणं तासां तेन स्वर्गो विधीयते ॥

यद्यपि पाणिग्रहणाद्धि सहत्वं कर्मसु तथापि शक्तौ भर्त्राद्यनुज्ञया न दोषः । वाराहे -

सूतके मृतके वापि दानार्चन विवर्जितम् ।
एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥

ऋश्यशृंगः -

संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशी व्रतम् ।
काम्ये नियोजये द्विप्रं स्वयं नाद्याद्रजस्वला ॥

पुलस्त्यः -

एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि ।
सूतके मृतके चैव नाश्नीयाद्धरिवासरे ॥

अयमेकादश्युपवासो नित्यः प्रत्यवायस्मृतेः । तथा विष्णुः -

एकादश्यां न भुञ्जीत कदाचिदपि मानवः ।
यदि भुञ्जीत मोहेन नरकेषु निमज्जति ।।

सनत्कुमार संहितायाम्-

एकादश्यां मुनिश्रेष्ठ यो भुङ्क्ते मूढचेतनः ।
प्रतिग्रासमसौ भुङ्क्ते किल्बिषं श्वानविट्समम् ।।

निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः ।।
एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता ।

नारदः -

पृथिव्यां यानि पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ।।
तानि पापान्युपाश्नाति संप्राप्ते हरिवासरे ।

कौर्मे -

रटन्तीह पुराणानि भूयो भूयो महामुने ।
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ।।

पाद्मे -

भोक्ष्ये विषं विशे वह्निं पतिष्ये पर्वताग्रतः ।
खड्गेन वा शिरश्छिन्द्यां न भोक्ष्ये हरि वासरे ॥

वरं श्वमांसं मद्यं वा सुतमांसं वरानने ।
तच्चेदपि नरैर्भुक्तं न भुक्तं हरिवासरे ॥

अयं नैमित्तिकश्च । पाद्मे -

तावद्गर्जन्ति पापानि देहेऽस्मिन्मनुजाधिप ।
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं परम् ॥

नेदृशं पावनं किंचित्त्रिषु लोकेषु विद्यते ।
यादृशं पद्मनाभस्य दिनं पातकनाशनम् ॥

न गंगा न गया भूप न काशी न च पुष्करम् ।
न चापि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन तु ॥

अयं काम्यश्च संयोगपृथक्त्वन्यायेन नित्यस्यकाम्यत्वमविरुद्धम् ।

स्कान्दे -

य इच्छेद्विपुलान्भोगान् मुक्तिं वात्यन्तदुर्लभाम् ।
एकादश्यामुपवसेत् पक्षयोरुभयोरपि ॥

विष्णुधर्मे-

य इच्छेद्विष्णुसायुज्यं सुतान्संपदमात्मनः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

कौर्मे -

य इच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥

यत्तु वचनम्-

'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ॥'

इति, तत् पक्षद्वयोपवासपरानेकस्मृतिविरोधात् प्रत्यवायस्मृतेश्चा-नादरणीयम् । यद्वा-

एकादश्यां सिते पक्षे यस्तु कुर्यादुपोषणम् ।
स विष्णुलोकं व्रजति कृष्णपक्षे विमुच्यते ॥

इति गोबिलाद्युक्त शुक्लैकादश्युपवासफलमात्राभिप्रायं वा। अत्र

कौर्मे-

न शंखेन पिबेत्तोयं न खादेत्कूर्म सूकरौ ।

गारुडे-

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि।

सनत्कुमार संहितायाम् -

एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः।

आग्नेये-

उपोष्यैकादशी राजन् यावदायुस्सुवृत्तिभिः।

कण्व :-

एकादशीमुपवसेन्नकदाचिदतिक्रमेत्।

श्रीविष्णुधर्मे -

स ब्रह्महा स गोघ्नश्च स्तेयी च गुरुतल्पगः।
एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि।।

मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा।
एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि।।

गारुडे-

सायं प्रातर्यथा सन्ध्ये सायं प्रातर्यथाहुती।
तथा सितासिते पुण्ये द्वादश्यौ धर्मतस्समे।।

पाद्मे-

एकादशीमुपोष्येत पक्षयोरुभयोरपि ।
यथा शुक्ला तथा कृष्णा न विशेषोऽस्ति धर्मतः ।।

स्मृतिसारसमुच्चये-

एकादश्यां तु यो भुङ्क्ते मोहेनावृत्तचेतनः ।
शुक्लायामथ कृष्णायां निरयं याति वै ध्रुवम् ।।

विवेचयति यो मोहाच्छुक्ला कृष्णेति पापकृत् ।
एकादशीं स्वयं याति नरकं नात्र संशयः ।।

वरं स्वमातृगमनं वरं गोमांसभक्षणम् ।
वरं हत्या वरं पानमेकादश्यां न भोजनम् ।।

इत्यादि द्रष्टव्यम् । अतः प्रत्यवायभीरुभिः शुक्लकृष्णैकादश्युपवासः कर्तव्य इति सिद्धम् । कात्यायनः -

नित्योपवासी यो मर्त्यस्सायं प्रातर्भुजिक्रियाम् ।
स त्यजेन्मतिमान्विप्रस्संप्राप्ते हरिवासरे ।।

बोधायनः-

अथ नित्योपवासी चेत्सायं प्रातर्भुजिक्रियाम् ।
वर्जयेन्मतिमान्विप्रस्संप्राप्ते हरि वासरे ।।

काम्ये देवलः-

सायमाद्यन्तयो रह्नोस्सायं प्रातश्च मध्यमे ।
उपवासफलप्रेप्सुर्जह्याद्भुक्तचतुष्टयम् ॥

इयमेकादशी तावद् विद्धा- शुद्धा- अधिकैकादशी- अधिकद्वादशिका चेति चतुर्विधा । अत्रैव विद्धाभेदान्तर्भावात् अरुणोदये दशमी युक्ता विद्धा । स च नाडीचतुष्टयात्मकः कालः । 'उदयात्प्राक्चतस्रस्तु घटिका अरुणोदयः', 'चतस्रोघटिकाः प्रातररुणोदय उच्यते,' इत्यादिस्मृतेः। अरुणोदये दशमीगन्धरहिता शुद्धा संपूर्णाख्या । तथा सौरधर्मेषु-

आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता ।
सैकादशी तु संपूर्णा विद्धान्या परिकीर्तिता ॥

भविष्यत्पुराणे च-

अरुणोदयकाले तु दशमी यदि दृश्यते ।
सा विद्धैकादशी तत्र पापमूलमुपोषणम् ॥

अतस्सूर्योदयवेधो विद्धाशब्दार्थ इति न भ्रमितव्यम् वचनाभावात्,

'अरुणोदयवेलायां दिशागन्धो भवेद्यदि ।
प्रदुष्टं तत्प्रयत्नेन वर्जनीयं नराधिप ॥'

इत्यादिवचनविरोधाच्च। अतस्सर्वैस्सर्वदा विद्धा त्याज्यैव।

तथा पाद्मे-

कलार्धेनापि विद्धां तु दशम्यैकादशीं त्यजेत्।
सुराया बिन्दुना स्पृष्टं गंगांभ इव निर्मलम्॥

श्वलीढं पञ्चगव्यं वा दशमीदूषितां त्यजेत्।
एकादशीं नृपश्रेष्ठ! पक्षयोरुभयोरपि॥

स्कान्दे -

अष्टमी सप्तमीविद्धा रोहिणी कृत्तिकान्विता।
दशम्यैकादशीविद्धा हन्ति पुण्यं पुरातनम्॥

'नोपोष्या दशमी विद्धा', 'दशम्यनुगता हन्ति', 'स याति नरकं ध्रुवम्', 'न तत्रैकादशी कार्या', 'पापमूलं तदा ज्ञेयमेकादश्या-मुपोषणम्', 'मोहिन्यै दत्तवान्हरिः', 'धर्मकामार्थनाशिनी', 'पुण्यं वर्षशतोद्भवम्', 'तस्यापत्यविनाशाय', 'परेत्य नरकं व्रजेत्', 'पाषण्डानां विवृद्धये', 'नरो धर्मेण मुच्यते' इत्यादीनि प्रागुक्तानि चात्रानुसंधेयानि। अत एव वेधसन्देहेऽपि द्वादश्येवोपोष्येति व्यक्तमुक्तं स्मृति चन्द्रिकायाम् -

बहुवाक्यविरोधेन सन्देहो यत्र जायते ।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ।।

स्मृत्यर्थसारे च-

बह्वागमविरोधे तु ब्राह्मणेषु विवादिषु ।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ।।

पाद्मे च -

एकादशी मुपोष्येत पक्षयोरुभयोरपि ।
सन्दिग्धेषु तु कार्येषु द्वादशीं समुपोषयेत् ।।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।

एवं विद्धाविषये द्वादश्युपवासत्रयोदशीपारणविधानात् कामिनोऽपि त्रयोदशीपारणं निर्व्याकुलम् ।

एकादश्यां तु विद्धायां नोपवासं समाचरेत् ।
द्वादश्यामेव कुर्वीत त्रयोदश्यां तु पारणम् ।।

इत्यादिकं चात्रानुसन्धेयम् । एतेन विद्धसमात्रयं विद्धहीनात्रयं च सर्वं नोपोष्यमिति सिद्धम् । शुद्धाविषये भविष्यत्पुराणे-

अरुणोदयं यथा शुद्धं दशमीशेषवर्जितम् ।
सर्वदोषविनिर्मुक्तमुपोष्यं तद्दिनं नरैः ।।

'नरैः'- वर्णाश्रम जातिभेदभिन्नैः । सर्वदोषविनिर्मुक्तम्-धर्मार्थकामापत्यनाशनरकादिदोषविनिर्मुक्तम् । दशमीशेष-विवर्जितत्वादित्यर्थः । नारदश्च-

उपोष्या सर्वदा शुद्धा द्वादशी वा द्विजोत्तमैः ।
क्षत्रै वैश्यै स्तथा शूद्रैः किमन्यच्छ्रोतुमिच्छसि ।।

ननु

'दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते ।
एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् ।।

शुद्धैव द्वादशी राजन् ! उपोष्या मोक्षकाङ्क्षिभिः ।
सकामैर्गृहिभिः पूर्वा विद्धापीति विनिश्चयः ।।'

इति निर्धारणाद्विद्धैव कामिभिरुपोष्येति चेन्न -

एकादशी यदा विद्धा परतो न विवर्धते ।
यतिभिर्गृहिभिश्चैव विद्धोपोष्या सदा तिथिः ।।

इति स्मृतिचन्द्रिकोदाहृतवचनेन सत्प्रतिपक्षत्वेन निष्कामस्यापि विद्धोपवास इति चेन्न, धर्मकामार्थनाशायुःक्षयापत्यनाश-वर्षशतोद्भवपुण्यहानिनरकादिप्रत्यवायापत्तेः सा व्यवस्था

दुस्स्थैव । विद्धोपवासवचनजातं किमर्थं प्रवृत्तमिति चेत् तामसशास्त्रवन्मोहनार्थमित्युक्तं किं विस्मृतम् । तद्यथा -

त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय ।
दर्शयित्वाल्पमायासं फलं शीघ्रं प्रदर्शय ॥

कुहकं चेन्द्रजालानि विरुद्धाचरणानि च ।
दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर ॥

यद्धीनतपसा युक्तं केवलं तामसं च यत् ।
तद्दुर्गतिप्रदं नृणा मिह लोके परत्र च ॥

यद्वेदबाह्यं कर्म स्यान्मामुद्दिश्योपसेव्यते ।
तद्रौद्रमिति विख्यातं कनिष्ठगतिदं नृणाम् ॥

इति वाराहाद्युक्तम्, तथाऽत्रापि मोहनार्थम् । तथा स्मृतिसार-समुच्चये -

यानि कानि च वाक्यानि विद्धोपोष्यपराणि तु ।
असुराणां मोहनाय पाषण्डानां विवृद्धये ॥

अतो विद्धां परित्यज्य द्वादशीं समुपोषयेत् ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥

स्मृतिचन्द्रिकायाम् -

ऊचुस्ते मोहिनीं देवा लोक संमोहनाय वै ।
दत्तं मोहिनि ते स्थानं प्रत्यूषे दशमीयुतम् ॥

गोबिलः -

अरुणोदयवेलायां दशमी यदि दृश्यते ।
संपृक्तैकादशी तां तु मोहिन्यै दत्तवान् हरिः ॥

इत्यादि प्रागुक्तमत्रापि द्रष्टव्यम् । अतो मोहिन्यर्थत्वाद्विद्धोपवासस्त्याज्य एव सर्वैरिति सिद्धम् । अथाधिकैकादशी द्विविधा विद्धाधिका शुद्धाधिका चेति । विद्धाधिकाविषये स्मृति चन्द्रिकायाम्-

एकादशी कलायुक्ता येन द्वादश्युपोषिता ।
किं तस्य बहुभिर्यज्ञैरश्वमेधादिभिर्नृप ॥

नारदश्च-

कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

अत्रापि विद्धायास्त्याज्यत्वविधानाद् विद्धाधिकाया

उपोष्यत्वस्मरणाच्च कामिनोऽप्यत्र त्रयोदशीपारणं निर्व्याकुलं क्रतुशतपुण्यसिद्धिरधिका। कौर्मे-

द्वादश द्वादशीर्हन्ति पूर्वविद्धा ह्युपोषिता।
तस्मात् सर्वप्रयत्नेन द्वादशीं समुपोषयेत् ॥

स्कान्दे -

द्वादशी संगता यत्र भवत्येकादशी कला।
दिनक्षयेऽपि सा पुण्या न दिशाढ्या कदाचन ॥

'दिशाढ्या' - दशमीविद्धा। 'दिनक्षयः' - तिथित्रयम्। चन्द्रिकायाम् -

द्वादश्यैकादशी यत्र संगता त्रिदशाधिप।
तामुपोष्य ततः कुर्यात् त्रयोदश्यां तु पारणम् ॥

द्वादशी मिश्रिता कार्या सर्वत्रैकादशी तिथिः।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥

पाद्मे च-

एकादश्याः कलात्वेका परतो द्वादशी न चेत्।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

इदं सर्ववचनं निष्कामविषयमिति चेन्न - क्रतुशतपुण्यस्मृतेः। 'तत्सुकृतदुष्कृते धूनुते', 'पुण्यपापे विधूय', इति मुमुक्षोः प्रतिबन्धकत्वेन पुण्यस्यापि त्याज्यत्वश्रुतेः।

कला काष्ठा मुहूर्तापि यदि न स्यात् परेऽहनि।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम्॥

इति दोषस्मरणात्कामिनो विद्धोपवास इति चेन्न- अस्य शुद्धाधिकैकादशीविषयत्वाद्विद्धोपवासेऽनर्थपरम्परास्मरणाच्च। विद्धाधिकाविषये त्रयोदशीपारणविधानाच्च न दोषप्रसंगः। विद्धाक्रमनिबन्धनत्वात्प्रत्यवायस्य प्रत्युतात्र फलं च स्मर्यते। वायुपुराणे-

कलाप्येकादशी यत्र परतो द्वादशी न चेत्।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्॥

स्कान्दे च-

एकादश्यां तु विद्धायां नोपावासार्चनादिकम्।
द्वादश्यामेव कुर्वीत त्रयोदश्यां तु पारणम्॥
शतयज्ञाधिकं पुण्यं मुक्तिरेव परं फलम्।

अस्य विद्धाविषयत्वेऽपि विद्धाधिकाविषयत्वं कैमुत्यन्याय-सिद्धम् । शतयज्ञाधिकमिति सकामविषयम् । मुक्तिरेवेति निष्कामविषयम् । अतो निष्कामकामिनोरुभयोरपि विद्धाविद्धाधिकयोः परत्रोपवास इति सिद्धम् । तथा विष्णुधर्मे-

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
अमावास्या तृतीया च उपोष्याः स्युः परान्विताः ॥

स्मृत्यन्तरे च -

कलार्धेनापि विद्धा स्याद्दशम्यैकादशी यदि ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

ननु विद्धैकादश्युपवासपरवचनबलेन शुद्धैकादश्युपवास इति चेन्न- विद्धात्यागपरवचननिचयबलेन शुद्धैकादश्युपवास-विधायकस्मृतिशतबलेन च शुद्धैकादश्युपवास इति निश्चयात् । तथा पाद्मे -

एकादशी मुपोष्येत द्वादशीमथवापि ताम् ।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥

शुद्धामेवैकादशीमुपोष्येत तस्यां दशमीवेधदूषितायां त्रयोदशी-विमिश्रां द्वादशीमुपोष्येत न कदाचिदपि दशम्या युताम् । इदं

शुद्धाधिकाविषयमिति चेन्न - शुद्धाशुद्धाधिकयोः पूर्वापरभावेन गृहस्थयत्योर्व्यवस्थितत्वस्मृतेः । शुद्धाधिकाविषये स्कान्दे -

प्रथमेऽहनि संपूर्णा व्याप्ताहोरात्रसंयुता ।
द्वादश्यां च तथा तत्र दृश्यते पुनरेव सा ॥
पूर्वा कार्या गृहस्थैस्तु निष्कामस्योत्तरा तिथिः ।

मार्कण्डेयः -

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां सदा ॥

विष्णुधर्मे -

निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा ।
सकामस्तु सदा पूर्वां परतो द्वादशी न चेत् ॥

परतः - त्रयोदश्याम् । गारुडे च -

पुनः प्रभात समये घटिकैका यदा भवेत् ।
तत्रोपवासो विहितश्चतुर्थवनवासिनोः ॥
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ॥

चन्द्रिकायां च-

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद् गृही ॥ एवं सति

'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
लुप्यते द्वादशी तत्र उपवासः कथं भवेत् ॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः।'

'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
त्रयोदशी उषःकाले उपोष्या तत्र का भवेत् ॥
उपोष्ये द्वे तिथी तत्र विष्णु प्रीणनतत्परैः ।'

इत्यादि वचनानामयमर्थः । अधिकारिभेदेन द्वे तिथी उपोष्ये विष्णुप्रीणनतत्परैः संयुक्ते द्वे तिथी उपोष्ये इति व्यवस्था द्वादश्याधिक्याभावे 'लुप्यते द्वादशी तत्र', 'त्रयोदशी उषःकाले', इत्यादि ज्ञापनात्, तस्मिन्सति सर्वेषामप्युत्तरत्रोपवासः । तथा वक्ष्यामः । एवमेतैर्व्यवस्थापकैर्वचनैः कामिनो विद्धोपवास-परवचनजातम् अधिकैकादशीविषयमिति व्यवस्थापितम् । अतः पित्राद्युच्छिष्टभक्षणवत् पञ्चानृतपातकवत् नान्यत्र प्रसंगः । अत्र विषये 'बह्वागम विरोधेन' इत्यादिज्ञापनात् गणितभेदेनारुणोदय-विद्धैकादश्याधिक्यद्वादशीह्राससंभवाभिप्रायं गृहस्थयत्यो-

र्व्यवस्थावचनजातमिति न चोद्यावकाशलेशः। ननु च

'उपोष्या दशमी विद्धा ऋषिरुद्दालकोऽब्रवीत्।
सकामैर्गृहिभिः पूर्वा विद्धापीति विनिश्चयः ॥',

'उपोष्यैकादशी तत्र दशमी मिश्रितापि च। एकादशी यदा विद्धा', इत्यादिष्वविशेषेण स्मरणात् सूर्योदयवेधः किं न स्यात् ? न स्यात् तथा तत्राप्रतीतेः। 'उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुता', 'आदित्योदय वेलायाः प्राङ्मुहूर्तद्वयान्विता' इत्यादि वचनैर्वाक्य-शेषन्यायेन विद्धाशब्दस्यारुणोदयवेधपरत्वनिश्चयादन्यत्र व्यवस्थापकाभावाच्च। अन्यथा त्वत्पक्षे सूर्योदयात्प्राक् प्रविष्टहीनैकादश्या विद्धात्वस्य दुर्वचत्वात् 'एकादशी यदा विद्धा द्वादशी सकला यदि', 'उपोष्या दशमी विद्धा' इत्यादिवचन-विषयत्वाभावात्, उदयादोदयान्तं वर्तमानत्वात् तथा शुद्धात्वाभावेन च 'शुद्धा यदा समाहीना समाक्षीणा तथोत्तरा', 'एकादशीमुपवसेन्न शुद्धां वैष्णवीं बुधः', इत्यादिवचन-विषयत्वाभावाच्च नेयं शुद्धा नापि विद्धा तदुभयावलम्बिनौ हि विधिनिषेधौ। ततस्सूर्योदयादर्वाक्तनासु समाक्षीणासूपवासलोप एव स्यात्, अतो विद्धोपवासपरवचनजातं कामिनो बहुवाक्य-

विरोधेनेति ज्ञापनाद्वाक्यभेदेनारुणोदयविद्धैकादशीविषयमेवेति निश्चीयते । तदेवम्-

एकादशी तु संपूर्णा परतः पुनरेव सा ।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् ॥

एकादशी तु संपूर्णा प्रभाते पुनरेव सा ।
द्वादश्यां लंघनं कार्यं त्रयोदश्यां तु पारणम् ॥

त्यादिकं निष्कामविषयमिति मन्तव्यम् । सकामस्य र्वत्रैवोपवासविधानात् । तथा श्री विष्णुरहस्ये-

निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा ।
सकामस्तु सदा पूर्वामिति बोधायनोऽब्रवीत् ॥

नु च 'धर्म कामार्थनाशिनी' त्यरुणोदयविद्धोपवासे वर्गनाशस्मरणात् कथं तत्रोपवास इति चेन्न- पक्षे वेधाभावात्, हुभिर्वचनैस्सकामनिष्कामयोरधिकैकादश्युपवासव्यवस्था-नस्यानतिक्रमणीयतया अरुणोदय विद्धोपवासप्रत्यवायपर-चनानामधिकैकादशीव्यतिरिक्तविषयत्वसिद्धेः, सर्वत्र विहित-ग्रतिरिक्तविषयत्वान्निषेधस्य । अन्यथा यागीयपशुहिंसाया अपि

निषेधस्स्यात् । ननु च द्वादशीह्रासयुक्तयोर्विद्धाधिका-शुद्धाधिकयोस्तिथित्रयत्वेन 'नोपोष्यं तत्सुतार्थिभिः', 'न कुर्यात् पुत्रवान् गृही', इत्यादिभिस्तत्रोपवासनिषेधात्कथं ते उपोष्ये - मैवम् ।

'द्वादश द्वादशीर्हन्ति पूर्वविद्धाह्युपोषिता ।
तस्मात्सर्वप्रयत्नेन पूर्वविद्धां परित्यजेत् ।।

इति विद्धोपवासप[redacted]स्मरणात् 'तामुपोष्य नरो जह्यात्पुण्यं वर्षशतोद्भवम्' इति प्रत्यवायस्मरणाच्च कथं विद्धोपवास इति तुल्यम् ।

'एकादशी यदा शुद्धा द्वादशी च क्षयं गता ।
दशमीमिश्रिता तत्र उपोष्या मुनिसत्तम ।।'

इति विधानाद्विद्धोपवास इति चेत्तर्हि निषेधविद्धोपवासविधी मिथस्संनद्धावद्धा युध्येताम् । सकामविषयो विधिर्निष्कामविषयो निषेधः -

शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः ।
सकामैर्गृहिभिः पूर्वा [redacted] विनिश्चयः ।।

इति निर्धारणादितिचेन्न द्वादशीह्रासससंयुक्तयोस्तयोस्सूर्योदयान्तं वर्तमानतया शुद्धात्वाभांवेन 'शुद्धैव द्वादशी राजन्' इति वचनेन द्वादश्युपवासस्य दुर्भणत्वात्। यथा त्वयैव विद्धहीनात्रयमेवोपोष्यं न तु सूर्योदयात्प्राक्प्रविष्टा द्वादशी तस्याश्शुद्धात्वाभावादित्युक्तम्, तथात्रापि। किञ्च – 'धर्मकामार्थनाशिनी', 'तस्यापत्यविनाशाय परेत्य नरकं व्रजेत्', 'द्वादश द्वादशीर्हन्ति', 'जह्यात्पुण्यं वर्षशतोद्भवम्', 'पापमूलं तदा ज्ञेयम्' इत्यादि वचनशतैस्सकामस्यैव विद्धोपवासानर्थपरम्पराप्रतिपादनात्। अतो दशमीमिश्रितद्वादशीयुक्तमेकादशीदिनं नोपोष्यमेव।

तथा गोबिलः –

एकादशी यदा ब्रह्मन् दिनक्षयतिथिर्भवेत्।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्॥
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्॥

ऋश्यशृंगः–

एकादशी यदा वत्स दिनक्षयतिथिर्भवेत्।
तत्रोपोष्या द्वादशी स्यात् त्रयोदश्यां तु पारणम्॥

अतः 'त्रियहस्स्पृगहोरात्रं नोपोष्यं तत्सुतार्थिभिः' इत्यादि वचनं तिथित्रयनिबन्धनोपवासनिषेधपरम् ।

आदित्येऽहनि संक्रान्तौ व्यतीपाते दिनत्रये ।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही ।।

इति तिथित्रयोपवासस्यैव पुत्रवतो निषेधात् । अतः - 'एकादशी यदा ब्रह्मन्', 'एकादशी यदा वत्स', 'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिभिर्या सा तिथिः कार्या सर्वपापहरा स्मृता ।।' इत्यादि वचनमेकादशीनिमित्तोपवासाभिप्रायम् । अतोऽयं तिथित्रय-संक्रान्त्यादिनिमित्तोपवासविषयो निषेधः । नित्यत्वादेकादश्युपवासविषयो विधिरिति न कश्चिद् विरोधः । अत्र त्रयोदश्यां पारणविधानात् ।

'एकादशी वार्कदिने भरण्यां वा यदा भवेत् ।
उपोष्यैकादशीं तां तु ब्रह्महत्यां व्यपोहति ।।'

'द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः ।'

'पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् ।'

इत्यादिभिः फलविशेषविधानाच्च त्रयोदशीपारणं कामिनो

निर्व्याकुलम्। अर्कदिनं तिथित्रयाद्युपलक्षणम्। अतस्तन्मेळनेप्ये-कादश्युपवासः कार्य एव। 'द्वादशी संगता यत्र तदाह्येकादशीं त्यजेत्', 'नोपोष्या दशमीयुता' इत्यादिस्मृतिभ्यो द्वादशीह्रास-युक्ताया विद्धाधिकाया काम्यैकादश्युपवासेऽपि न तत्र त्रयोदशी-पारण निषेधः। किंचिन्मात्रद्वादशीसंभवे द्वादश्यतिक्रमे त्रयोदशी पारण एव निषेधः। द्वादश्यभावे त्रयोदशीपारणस्यैव विहितत्वात्। अनन्तपुण्यहेतुत्वाच्च न तत्र दोषः। तथा नारदः -

त्रयोदश्यां तु शुद्धायां पारणे पृथिवी फलम्।
शतयज्ञाधिकं पुण्यं नरः प्राप्नोत्यसंशयः॥

'पुण्यं क्रतुशतस्योक्तम्', 'तत्र क्रतुशतं पुण्यम्' इत्यादिस्मृतिभ्यो गृहस्थयत्योः पूर्वापरभावेन उपवासव्यवस्था न स्थेयसी। अत्र शुद्धा वा विद्धा वा द्वादश्याधिक्ये सर्वैर्द्वादश्येवोपोष्या।

तथा नारदः -

न चे देकादशी विष्णौ द्वादशी परतः स्थिता।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम्॥

एकादशी यदा लुप्ता परतो द्वादशी यदि ।
उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते ॥

गारुडे-

पूर्णा भवेद्यदा नन्दा भद्रा चैव विवर्धते ।
उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते ॥

पूर्णा-शुद्धा । नन्दा-एकादशी । भद्रा-द्वादशी ।

स्कान्दे-

एकादशी भवेत्पूर्णा परतो द्वादशी यदि ।
तदाह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

वायुपुराणे -

एकादशी यदा पूर्णा परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते ॥

स्मृतिसारसमुच्चये च-

पूर्णाप्येकादशी त्याज्या द्वितीया यदि वर्धते ।
शुद्धा वा यदि वा विद्धा वृद्धामेवोपवासयेत् ॥

वृद्धा-अधिकैकादशी । द्वितीया- द्वादशी । पूर्णा-वेधरहिता । त्रयोदश्यां द्वादशीसंभवे द्वादशीमेवोपवासयेदित्यर्थः । तदेवं

हुभिर्वचनै र्द्वादश्याधिक्यमात्रावलंबनेन द्वादश्युपवास-
प्रधानाद् द्वादश्याधिक्ययुक्तासु विद्धहीनाशुद्धहीनाशुद्धसमासु
र्वत्रोपवासकथनं बहुस्मृति विरुद्धत्वाद्दूरं निरस्यम्। ननु-

शुद्धा यदा समाहीना समाक्षीणाधिकोत्तरा।
एकादशी मुपवसेन्न शुद्धां वैष्णवीं बुधः॥

ति वचनविरोधान्न परत्रोपवास इति चेन्न- अधिक-
ादश्युपवासपरानेकस्मृतिविरोधेन दुर्बलस्यास्य त्याज्यत्वात्।
शुद्धाप्येकादशी त्याज्या परतो द्वादशी यदि' इत्यादि
चनविरोधाच्च 'शुद्धा यदा समाहीना' इत्यनूदितयोस्समाहीनयोः
तियोगित्वेन 'समाक्षीणा तथोत्तरा' इति वक्तुं युक्तत्वात्
माक्षीणाधिकोत्तरा इतिपाठोऽपपाठः। ननु

दशमी मिश्रिता कार्या सर्वत्रैकादशी तिथिः।
प्रादुर्भवतु वा मा वा यतो नित्यमुपोषणम्॥

त्रयोदश्यां न लभ्येत द्वादशी यदि किंचन।
उपोष्यैकादशी तत्र दशमीमिश्रितापि च॥

त्य[redacted] इति चेन्न - विद्धहीनाविषयत्वा-
तीतेः। 'द्वादश[redacted]मिश्रिता' इत्येव पाठाच्च। तथैव हि त्वया

प्रतीच्यमतोपन्याससमये पठितम् । संग्रहे च 'द्वादशीमिश्रिता' इत्येव पाठो दृश्यते । अतो दशमीमिश्रितेत्यादिषु पाठस्य सन्देहाद् दशमीवेधत्यागस्य बहुस्मृतिसिद्धत्वाद्वेधस्यान्यार्थं प्रवृत्तत्वाच्च न विद्धहीनासूपवासप्रसंगः । ननु च-

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या परा पूर्णा परतो द्वादशी यदि ॥

इतिस्मृतेरुभयाधिक्य एव सकामस्य परत्रोपवास इति न भ्रमितव्यम् 'एकादशी यदा लुप्ता', 'न चेदेकादशी विष्णौ', इत्यादिवचनैरेकादश्याधिक्याभावेऽप्यधिकद्वादश्युपवासविधानात्, 'एकादशी परित्याज्या', 'शुद्धाप्येकादशी त्याज्या' इत्यादौ 'उपोष्या द्वादशी तत्र' इत्यादौ च अधिकारिविशेषानुल्लेखेनैवाधिकैकादश्युपवासविधानान्न विषयसंकोचो युक्तः । किञ्च-

'एकादशी विवृद्धा चेच्छुक्लपक्षे विशेषतः ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद् गृही ॥

इत्यधिकैकादश्यां यथा सकामस्य पूर्वत्रोपवासो विहितः, तथा द्वादश्याधिक्येऽपि प्रसक्ते तदपवादत्वेन 'परतो द्वादशी यदि' इत्यादिद्वादश्याधिक्यमनूद्य परत्रोपवासो विधीयते 'तत्रोपोष्या

द्वितीया' -इति। अतो द्वादश्याधिक्ये सर्वैरपि परत्रोपवास: कार्य:।

तथा नारद: -

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
सर्वै रेवोत्तरा कार्या परतो द्वादशी यदि ॥

'संपूर्णा' -

'उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता।
संपूर्णैकादशी नाम तत्रैवोपवसेद् गृही ॥'

इति गारुडाद्युक्तलक्षणा। नारद:-

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥

'तत्र' -अधिकैकादश्याम्। 'उपोष्या' -अधिकैकादशीयं प्रथमा। तत्र यदि परत: - त्रयोदश्यां द्वादशी स्यात्। तदा द्वितीया - अधिकद्वादश्येवोपोष्येत्यर्थ:। तत्र एकैकमेवोपवासे निमित्तमिति स्पष्टम्। चन्द्रिकायाम् -

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते ॥
गृहस्थोऽपि परां कुर्यात्पूर्वां नोपवसेद् गृही ॥

'सकामस्तु सदा पूर्वाम्' इति च प्राप्तप्रतिषेधो नानुपपन्नः। अधिकद्वादश्युपवासस्य सन्तानहेतुत्वमाह नारदः-

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
तत्रोपोष्या द्वितीया तु पुत्रपौत्रविवर्धनी॥

अत्र च पार्थक्यं स्पष्टम्। तदेवम् -

एकादशी न चेद्विष्णौ द्वादशी परतस्स्थिता।
उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम्॥

इति वाराहादिवचनं चैवमेव द्रष्टव्यम्। द्वादश्याधिक्याभावेप्यधिकैकादश्युपवासस्यानेकवचनसिद्धत्वादधिकैकादश्येवोपोष्या। एवमेकादश्याधिक्याभावेऽपि द्वादश्याधिक्ये सैवोपोष्या। शुद्धैकादश्युपवासे तु - 'एकलिप्त्या च संयुक्ता यदि वृद्धिपरा तिथिः', 'अथवैकादशी नास्ति दशम्या वाप्यसंगता', 'द्वादशी तु कला काष्ठा यदिस्यादपरेहनि', 'द्वादश द्वादशीर्हन्ति पूर्वस्यां पारणं कृतम्' इति प्रत्यवायस्मरणात् 'एकादशीं परित्यज्य', 'शुद्धाप्येकादशी त्याज्या' इति शुद्धाया अप्येकादश्याः परित्यागविधानाच्च अधिकद्वादश्येव सर्वैरुपोष्येति निरवद्योऽयं निर्णयः।

स्मृत्यन्तरे-

एकादशी तु संपूर्णा द्वादशी वृद्धिगामिनी ।
वञ्जुला नाम सा प्रोक्ता कोटियज्ञफलप्रदा ।।

वञ्जुल द्वादशीं त्यक्त्वा यःकुर्यात्पूर्ववासरे ।
सप्त जन्म कृतं पुण्यं तत्क्षणादेव नश्यति ।।

वाराहे-

आभाकासितपक्षेषु मैत्रश्रवणरेवती ।
आदि मध्यावसानेषु भवेयुर्द्वादशीषु चेत् ।।
ते पावनाह्वया योगा मुनिभिः परिकीर्तिताः ।।

आभाकासितपक्षेषु- आषाढभाद्रपदकार्तिकशुक्लपक्षेष्वित्यर्थः ।

मात्स्ये च -

शेते विष्णु स्सदाऽऽषाढे भाद्रे च परिवर्तते ।
कार्तिके च प्रबुध्येत शुक्लपक्षे हरेर्दिने ।।

इत्येकादशी निर्णयः ।

# चातुर्मास्यव्रतम्

चातुर्मास्यं नाम चतुर्मासकर्तव्यं व्रतम् । तस्य विष्णुस्वाप-निमित्तत्वात् स तावन्निरूप्यते । स्वभावतो मिथुनाषाढ एव विष्णोस्स्वापः । तथा श्रीधरीये -

स्वापस्तु विष्णोर्मिथुने शुक्लद्वादशिकातिथौ ।
पवित्रं विदधीतैव मिथुनस्थे दिवाकरे ॥

भृगुश्च-

आषाढशुक्लद्वादश्यां शयनं कुरुते हरिः ।
कार्तिकशुक्लद्वादश्यां कुरुते बोधनं हरिः ॥

तथा-

दुग्धाब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः ।
निद्रां त्यजति कार्तिक्यां तयोस्संपूजयेद्धरिम् ॥

मात्स्ये च -

शेते विष्णु स्सदाषाढे भाद्रे च परिवर्तते ।
कार्तिके तु प्रबुध्येत शुक्लपक्षे हरेर्दिने ॥

सदेति - मिथुनाषाढे वा कर्कटाषाढे वा सर्वथा आषाढ एव

विष्णोस्स्वापो नान्यदेत्यर्थः। कर्कटके शयनवचनं मिथुने दर्शद्वयसंभवविषयम्। श्रीधरीये -

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।
द्विराषाढस्स विज्ञेयो विष्णुस्स्वपिति कर्कटे॥

तत्रैव-

दर्शद्वयं भवेद्यत्र रविसंक्रान्तिवर्जितम्।
अधिमासस्सविज्ञेयो विष्णुस्स्वपिति कर्कटे॥

मरीचिश्च-

कृष्णपक्षे दशम्यादौ मेषं गच्छेद्दिवाकरः।
द्विराषाढस्स विज्ञेयो विष्णुस्स्वपिति कर्कटे॥

वृद्धमिहिरश्च-

माधवाद्येषु षट्स्वेकमासि दर्शद्वयं भवेत्।
द्विराषाढस्स विज्ञेयः शेते कर्कटकेऽच्युतः॥

मेषादिषट्स्वन्यतममासे दर्शद्वयसंभवे मिथुनादिदर्शे ज्येष्ठमासस्य गतत्वान्मिथुनकर्कटकराशिद्वयस्थस्य चान्द्रमासद्वयस्याषाढ-संज्ञत्वात्पूर्वस्य दुष्टत्वादुत्तराषाढस्य शुद्धत्वाच्च कर्कटकाषाढ एव विष्णोस्स्वाप इत्यर्थः।

एवं कर्कटकाधिकत्वे तु कर्कटकादिदर्शेन कर्कटकाषाढस्य गतत्वात् श्रावणमासद्वयस्य प्रवृत्तेस्तत्र विष्णुस्वापे प्रमाणाभावा-दधिकमासस्य दुष्टत्वात्सदाषाढशब्दवैयर्थ्यप्रसंगादुत्सर्गतः प्राप्ते मिथुनाषाढ एव विष्णोस्स्वाप इति श्रीधरीये व्याख्याततत्वाच्च मिथुनाषाढ एव विष्णोस्स्वापः। तथा भविष्यत्पुराणे-

मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम्।
तुलाप्राप्ते महाराज तत उत्थापयेद्धरिम्॥

अधिमासे तु पतितेप्येष एव विधिस्स्मृतः।
नान्यदा स्वापयेत्कृष्णं नान्यदोत्थापयेद्धरिम्॥

अतः सामान्यहिंसानिषेधस्य यागीयपश्वालंभनविधिनेव मिथुनस्थ इति विशेषवचनेन कर्कटाषाढशयनपरसामान्यवचनस्य बाधो द्रष्टव्यः। तर्हि 'माधवाद्येषु षट्'स्विति किमर्थमिति चेन्मैवम्। सामान्येनोक्तस्य दर्शद्वययुक्तस्य द्विराषाढापरनाम्नः अधिमासस्य वत्सरान्तरे विष्णुस्वापव्यवस्थाप्रदर्शनार्थत्वात्। तथा वृद्ध मिहिरः -

मेषादि मिथुनान्तेषु यदा दर्शद्वयं भवेत्।
अब्दान्तरे तदावश्यं मिथुनार्के हरिस्स्वपेत्॥

कर्कटादित्रिके वापि यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तदावश्यं कर्कटार्के हरिस्स्वपेत् ।।

एवं व्यवस्थोपयोगित्वेन माधवाद्येष्विति वचनमित्यविरोधः । एवमाषाढशुक्लद्वादश्यां विष्णुशयनविधानादाषाढपौर्णमास्यामेव यतीनां संकल्पः । कथंचित्तत्रासंभवे "यावत्स्यात्कृष्णपञ्चमी" इति स्मरणात् तत्र वा संकल्पः कार्यः । ननु

'श्वो भाविनीं प्रतिपदमारभ्य श्रावणीं यतिः ।
न प्रयायाच्चतुर्मासान्वपनं कारयेन्न च ।।

श्रावणं मासमारभ्य यावन्मासचतुष्टयम् ।
वसेयुस्सर्वयतय एकत्रैवेति निश्चितम् ।।'

इत्यादि वचनैः श्रावणेऽपि यतीनां संकल्पः स्मर्यत इति चेत्- मैवम् । समर्थस्त्वं तदर्थमविज्ञाय संबंभ्रमीः ।

दर्शान्ताः पौर्णमास्यन्ताश्चान्द्रमासा द्विधा स्मृताः ।
यतीनां पौर्णमास्यन्ता दर्शान्ताः पितृकर्मणि ।।

इति दर्शान्तचान्द्रमासाषाढान्तः पाति पौर्णमास्यन्तत्वेन यत्याषाढस्य गतत्वेऽपि कृष्णप्रतिपत्प्रभृति प्रवृत्तयतिश्रावण-मासस्याषाढत्वात्तदवलंबेन 'श्रावणं मास' मित्यादिवचनमित्य-

विरोधः। ततश्चाषाढातिक्रमे संकल्पकालातिक्रमप्रायश्चित्तकृच्छ्रं कृत्वा संकल्पः कार्य इति विवेकः। नन्वेवं मासाधिक्ये चातुर्मास्यव्यपदेशभंगप्रसंग इति चेन्न- 'षष्टिभिर्दिवसैर्मासः कथितो बादरायणैः' इति षष्टिदिनानामेकमासत्वस्मरणात्। नन्वधिकाभावेऽप्याषाढमासमारभ्य कार्त्तिकमास एव समापनेऽपि चातुर्मास्याधिक्यमितिचेन्मैवम्-अविचारितरमणीयत्वात्। आषाढकार्तिकयोः पौर्णमास्योरेवारम्भसमाप्तिविधानात् संकल्पसमापनयोः पूर्वत्र च परत्र च पञ्चदशदिनविरहान्न चोद्यावकाशः। भगवानप्याह-

'शयने बोधने चैव मदंगपरिवर्तने।
उपवासमकुर्वाणो हृदि शल्यं ममार्पयेत्' ॥

अत्यन्ताशक्तेनाप्यवश्यमिदं त्रयमुपोषितव्यमिति भावः। शौनकः-

हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः।
प्रस्वापे च प्रबोधे च पूजितो येन केशवः ॥

# श्रवण द्वादशी निर्णयः ।

ारदः-

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयोरेवोपवासस्स्यात्त्रयोदश्यां तु पारणम् ॥

त्र त्रयोदशीपारणे निषेधो नास्त्येव । विहितत्वात् । पाद्मे-

एकादश्यामविद्धायां संप्राप्तश्रवणा तदा ।
उपोष्या द्वादशी तत्र सर्वपापक्षयावहा ॥

कादश्यामविद्धायामपि नोपवसेत् । अपि तु संप्राप्तश्रवणा ादश्येवोपोष्येत्यर्थः । तथा तत्रैव-

यदा ह्येकादशी शुद्धा द्वादशी श्रवणान्विता ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥

ात्स्ये-

द्वादश्यां शुक्लपक्षस्य नक्षत्रं श्रवणं यदि ।
उपोष्य द्वादशीं तत्र हरिमभ्यर्चयेन्नरः ॥

नभस्ये द्वादशी शुक्ला कृष्णा माघेऽथ फाल्गुने ।
मध्याह्नव्यापिनी श्रोणा श्रवणद्वादशी मता ॥

स्मृतिसारसमुच्चये -

द्वादशीं श्रवणोपेतां यो नोपोष्येत दुर्मतिः ।
पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ॥

अतः श्रवणद्वादशी नित्या । त्यागे प्रत्यवायस्मृतेः । शक्त विषये तत्रैव-

एकादशीमुपोष्याथ द्वादशीं समुपोषयेत् ।
न तत्र विधिलोपस्स्यादुभयोर्दैवतं हरिः ॥

पैठीनसिः-

युग्माग्नियुगभूतानि षण्मुनी वसुरन्ध्रके ।
रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा ॥

प्रतिपद्यप्यमावास्या त्रयोदश्यां चतुर्दशी ।
एतद्युग्मं महापुण्यं प्रवदन्ति मनीषिणः ॥
व्यस्तमेतन्महादोषो हन्ति पुण्यं पुरातनम् ॥

'युग्मा' -द्वितीया। 'अग्निः' -तृतीया। 'युगं' - चतुर्थी। 'भूतं' - पञ्चमी। 'षट्' - षष्ठी। 'मुनिः' -सप्तमी। 'वसुः' -अष्टमी। 'रन्ध्रं' - नवमी। 'रुद्रः' - एकादशी। 'द्वादशी' - श्रवणद्वादशी। 'एतद्युग्मं' -

ोथिद्वयम्। व्रतोपवासादिषु पूज्यम्। 'व्यस्तं'-वियुक्तम्। द्वितीया तिपद्युक्ता, तृतीयायुक्ता चतुर्थीत्येवं पृथक्तिथियुक्ता पुण्य-वनाशिनी। अत एकादशीयुक्तैव श्रवणद्वादश्युपोष्या न तु योदशीयुक्ता। 'हन्ति पुण्यं पुरातनम्' इति स्मृतेः। तथा कौर्मे-

नाग विद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः॥

ागः'- पञ्चमी। 'रुद्रः'-अष्टमी। 'दिवाकरः'- सप्तमी। ामः'- त्रयोदशी। 'विष्णुः'- श्रवण द्वादशी। वेधे नियममाह ीनसिः -

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्।
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिस्स्मृतः॥

स्यार्थः- उदयानन्तरं पूर्वा तिथिस्त्रिमुहूर्ता चेत् सा परां तिथिं ध्यति। परेद्युव्यस्तमयात्प्रागुत्तरा त्रिमुहूर्ता चेत् सापि पूर्वां तिथिं ध्यति। तदेतत्संगृहीतं कालनिर्णये -

उदये पूर्वया तिथ्या विध्यते त्रिमुहूर्तकैः।
सायं तूत्तरया तद्वत् न्यूनया तु न विध्यते॥ इति।

न पुनरत्र विशेषविधिर्दृश्यते । अतस्त्रिमुहूर्तवेध एव ग्राह्यः ।

श्रीविष्णुपुराणे विशेषः -

याः काश्च तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
तास्वेव तद्व्रतं कुर्यात् श्रवणद्वादशीं विना ।।

संग्रहे -

द्वादशीं श्रवणर्क्षं च स्पृशेदेकादशी यदि ।
स एव वैष्णवो योगो विष्णुश्रृंखलसंज्ञितः ।।

पारणविषये पाद्मे-

कलार्धं त्रितयं वापि द्वादशीं न व्यतिक्रमेत् ।
महाहानिकरी ह्येषा द्वादशी लंघिता नृणाम् ।।
करोति धर्मविध्वंसमस्नातेव सरस्वती ।।

चन्द्रिकायाम्-

एकादशी मुपोष्यैव द्वादश्यां पारणं भवेत् ।
त्रयोदश्यां न कुर्वीत द्वादश द्वादशीक्षयात् ।।

अतोऽल्पायामपि द्वादश्यां पारणमवश्यं कर्तव्यम् । अतिक्रमे प्रत्यवायस्मरणात् । नारदः -

कलायामपि विप्रेन्द्र द्वादश्यां पारणं स्मृतम् ।
अज्ञानाच्चेत्त्रयोदश्यां पारणं राक्षसं भवेत् ।।

यदा भवेत्त्रयोदश्यां द्वादश्यास्तु कलाद्वयम् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ।।

द्वादश्यभावे त्रयोदश्यां पारणे न दोषः ।

एकादशी कलायुक्तामुपोष्य द्वादशीं नरः ।
त्रयोदश्यां तु यो भुङ्क्ते विष्णोस्सायुज्यमृच्छति ।।

गारुडे-

यदा त्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत् ।
प्रातर्माध्याह्निकस्यापि तत्र स्यादपकर्षणम् ।।

स्कान्दे-

यदा भवेदतीवाल्पा द्वादशी पारणे दिने ।
उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तथा ।।

देवलः-

संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ।
अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तं न दोषकृत् ।।

कात्यायनः-

सन्ध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः ।
अद्भिस्तु पारयित्वाथ नैत्यकान्ते भुजिर्भवेत् ॥

पाद्मे-

कलायामपि विप्रेन्द्र द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्या दानहोमादिसंयुता ॥

एतस्मात्कारणाद्विप्र प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणादिकं कृत्यं स्वल्पां दृष्ट्वैव द्वादशीम् ॥

अरुणोदयवेलायां कृत्यं सर्वं समापयेत् ।
नातिक्रमेद् द्वादशीं तु यथाकालं द्विजोत्तमः ॥

ब्रह्माण्डे-

कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामं च प्रवासश्च दिवास्वापम् [1]अथाञ्जनम् ॥

तिलपिष्टं मसूरांश्च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥
द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोतकीम् ॥

अनेन 'शाकं मांसं तथा क्षौद्रम्' इत्यत्र शाकं व्याख्यातम् । पाद्मे-

1 अथाञ्जनम् - च मैथुनम् (पा)

व्यायामं व्यवसायं च दिवास्वप्नमथाञ्जनम् ।
शष्कुल्यपूपं द्वादश्यां वर्जयेद्भोजनं पुनः ॥

अत्रेदं चिन्त्यते-नित्यं नैमित्तिकं काम्य मिति त्रिविधं कर्म। नित्येषु यथाधिकारं विधिः प्रवर्तते। काम्येषु यथा विध्यधिकारः। नित्यं तु यथाशक्ति करणेनापि चरितार्थम् । काम्यं पुनस्सांगानुष्ठानेन सफलम् । तच्च न शक्यं कर्तुम् द्रव्यमनश्शरीरादिशुद्ध्यभावात् । अत्र काम्यानुष्ठानान्नित्यसिद्धिरिति व्यामोहमात्रम् । कर्मकर्तृ-साधनवैगुण्येन काम्यस्यैवासिद्धेः । अत एवापस्तम्बः -'नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेन्निष्फला ह्यभ्युदये भवन्ति' इति सांगानुष्ठानवैकल्येन काम्यस्य नैष्फल्यमभिधाय 'तद्यथा आम्रे फलार्थे निमिते छायागन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते नो चेदनूत्पद्यन्ते न धर्महानिर्भवति' इति । नित्यानुष्ठानादेव काम्यसिद्धिमाहोज्ज्वलायाम् -

यथेक्षुहेतोस्सलिलं प्रसेचितं तृणानि वल्लीरपि च प्रसिञ्चति ।
तथा नरो धर्मपथेन वर्तयन् यशश्च कामांश्च वसूनि चाश्नुते ॥

स्मृत्यन्तरे च-

अकृत्स्नत्वात्साधनानां मौढ्यात्कर्मकृतस्तथा ।
फलस्य चाभिसन्धानादपवित्रो विधिस्स्मृतः ॥

अतो नित्यानुष्ठानादेव काम्यसिद्धिः । तदसिद्धावपि काम्यवन्नार्थ-हानिः । एवं मुख्यकल्पशक्तस्यानुकल्पानुष्ठाने फलहानिः -

प्रभु : प्रथमकल्पस्य योनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

इति मनुयाज्ञवलक्यादिस्मृतेः । यथावन्मुख्यकल्पासंभवाद् गौणकल्पनिषेधाच्च यथाशक्ति नित्यमेवानुष्ठेयम् । पाद्मे-

हरिदिवसमुपोष्य प्रोक्तमार्गेण जन्तु-
र्व्रजति न पुनरन्तर्वस्तिगोळं जनन्याः ।
बहुवृजिनसमेतः कामरागान्वितोऽपि
व्रजति पदमनन्तं लोकनाथस्य विष्णोः ॥

इति श्रीहारीतकुलतिलकस्य सरस्वतीवल्लभपौत्रस्य श्री रंगनाथ-सूनोर्वैदिकसार्वभौमापरनामधेयस्य श्री वेंकटनाथस्य कृतिषु दशनिदर्णय्याम्

एकादशी निर्णयस्समाप्तः ।

## समाप्ता च दशनिर्णयी ।

प्राह प्रबन्धं दशनिर्णयीति ख्यातं सुधी वैदिकसार्वभौमः ।
ज्ञेयार्थपूर्णं स्मृतिसारमेनं निर्मत्सरा मत्कृतिमाद्रियध्वम् ॥

वेदान्तराळप्रथने प्रवृत्ते तल्लक्षणे संशयिते च कृत्ये ।
यत्संनिधाने मुनयस्सुधन्यास्स हि स्मृतो वैदिकसार्वभौमः ॥

पाण्डित्यविख्यापनतत्पराणां ग्रन्थैर्विरुद्धैरलमव्यवस्थैः ।
निर्मत्सराः पश्यत तं प्रबन्धं ब्रवीति यं वैदिकसार्वभौमः ॥

जयन्तीकृत्तिकादीपोपाकृतीनां विनिर्णयाः ।
प्रवरस्याथ निर्णीतिस्समानप्रवरस्य च ॥

विवाह्यकन्यानिर्णीतिस्स्थालीपाकस्य निर्णयः ।
भक्ष्याभक्ष्यस्योत्सवस्यैकादश्याश्च विनिर्णयाः ॥

प्रणीतास्सार्वभौमेन त एते निर्णया दश ।
इह तस्मादिमं प्राहुर्निबन्धं दशनिर्णयम् ॥

आशौचपूर्वशतकं पितृमेधसारं
व्याख्यां तयोश्च दशनिर्णयगृह्यरत्ने ।
रत्नाकरं विबुधकण्ठविभूषणं च
प्राह प्रबन्धमिति वैदिकसार्वभौमः ॥

॥शुभम् ॥